
LUXOR SUPER OFFER
FREE!
LUXOR COLOUR FUN BOOKS
Buy
ANY OF THESE
4 DISNEY
PEN SETS
AND GET
AN EXCITING
LUXOR COLOUR
FUN BOOK FREE!
ENTER THE
MAGIC WORLD OF
LUXOR COLOUR.
ENTER THE
WORLD OF
EXCITEMENT.
Luxor®
Everyday, India writes the Luxor way.
Luxor Pen Company, 5631, First Floor, Qutab Road, New Delhi-110055, Tel.: 514885, Cable: HITECPEN.
CLARION D 4288

# चन्दमामा

मार्च्-१९९२

*

## अन्तरङ्गम्


| | | | |
|---|---|---|---|
| सम्पादकीयम् | .... ७ | चन्दमामानुबन्धः–३९ | .... ३३ |
| वार्ताविशेषः | .... ९ | पिशाचगृहम् | .... ३७ |
| पाण्डित्यं श्रेष्ठम् | .... ११ | वृथा व्ययः | .... ४२ |
| साहसकार्यम् | .... १६ | वीरः हनूमान्–२० | .... ४५ |
| अपूर्वस्य साहसगाथा-११ | .... १७ | त्रयः प्रश्नाः | .... ५३ |
| राज्ञः पाचकः | .... २४ | श्वेतः गजः | .... ६० |
| नियमभङ्गः | .... २५ | प्रकृतिवैचित्र्याणि | .... ६३ |
| कालकविषये मूढविश्वासः | .... ३२ | चित्रशीर्षिकास्पर्धा | .... ६५ |


*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अचिरात् - Not long ago
अण्डशल्कम् - Egg shell
अनुल्लङ्घ्यम् - Inviolable
अपगतः - Departed or left
अर्बुदरोगः - Cancer
अविदिता - Unknown
आवुत्तः - Brother–in–law
कनिष्ठिका - Little finger
कर्णलुण्ठनम् - Twist the earlobe
काकी - Crow (Female)
कालकम् - Mole
कुम्भकारः - Potter
कोणः - Corner
क्वथति - Boils
घटते - Will be settled
चन्द्रकः - Sign of the eye on peacock's feather
चूषति - Sucks
तालः - Lock
तिन्त्रिणीबीजम् - Tamarind seed
दंष्ट्रा - Tusk

निश्रेणी - Ladder
नैष्ठुर्यम् - Discourtesy
पिपीलिका - Ant
बर्हम् - Peacock's feather
भल्लूकः - Bear
भाण्डम् - Huge vessal
भ्रातृजाया - Sister–in–law
मणिबन्धः - Wrist
मशकः - Mosquito
रजकः - Washerman
वानरः - Monkey
विप्लवः - Revolt
विस्मृतप्रायः - As if forgotten
शावकः - The young one
शिखा - Tuft of hair on the head
शिरोभ्रमणम् - Giddiness
श्यालः - Wife's brother
सम्पन्नम् - Concluded
सुधा - Lime (Stone)
स्तन्यम् - Breast milk

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'  सञ्चालकः– 'नागिरेड्डी'

## परिपूर्णता एव देवत्वम्

'भगवान् स्वप्रतिबिम्बरूपं मानवम् असृजत्' इति प्राचीनाः ग्रन्थाः वदन्ति। 'देवसृष्टेः मानवस्य अहो परिपूर्णता!' इति विज्ञानिनः, तत्त्ववेत्तारः, विद्वज्जनाः च आश्चर्यं प्रकटयन्ति। देहस्य आकारः, तत्तत्स्थाने तत्तस्य अङ्गस्य निवेशनम् इत्यादीनि सध्यानं परिशील्य वयं निर्णेतुं शक्नुमः यत् यस्य कस्यचित् अङ्गस्य आकारे, स्थाने, स्वरूपे वा यदि परिवर्तनं स्यात् तर्हि शरीरम् अपरिपूर्णम् अभविष्यत्, समर्थतया कार्यं कर्तुं शक्तम् अपि न अभविष्यत् इति। अन्या आश्चर्यकरी सृष्टिः नाम मस्तिष्कम्। तत् कथं कार्याणि निर्वहति इति तु इतोऽपि निगूढम् एव अस्ति।

देवः स्वप्रतिबिम्बरूपेण मानवं सृष्टवान् इत्यतः मानवः अपि देवः इव परिपूर्णः एव स्यात् खलु? मानवः स्वयं परिपूर्णतां प्राप्तुं प्रयत्नं कुर्यात् इति भगवतः आशयः। एतम् एव आशयं मनसि निधाय ख्यातः पत्रिकोद्यमी मुम्बयीनगरे पारसीयुवकसभायाम् उक्तवान्– 'परिपूर्णता एव देवत्वम्। यत्र परिपूर्णता तत्र देवः वसति' इति। तेन एतदपि उक्तं यत् परिपूर्णताप्राप्तिः नाम आत्मनि देवत्वस्य अभिज्ञानम् इति।

परिपूर्णताप्राप्तिप्रयत्नः बाल्ये एव आरभ्यते। प्रथमं मातापितरः अत्र सहकुर्वन्ति। ततः गुरूणां विद्याभ्यासस्य च साहाय्येन, ग्रन्थानाम् आधारेण, मित्राणां साहचर्येण, अन्ते समाजाङ्गत्वप्राप्त्या च परिपूर्णता प्राप्यते। एतत्कारणतः अस्मासु उत्तमाः विचाराः उत्पद्यन्ते, उत्तमकार्यकरणे उत्साहः वर्धते।

परिपूर्णतायाः अपरं वैचित्र्यं नाम तस्याः इयत्ता न भवति। उदाहरणार्थं ख्यातक्रीडापटोः सेर्जीबुब्कावर्यस्य जीवनं परिशीलयाम। तस्य सर्वोऽपि प्रयत्नः पूर्वतनप्रयत्नम् अतिशेते। तथापि सः तृप्तिं न प्राप्नोति। अधिकां प्रगतिं प्राप्तुम् ईहते। एतादृशः मनोभावः सर्वेषाम् अपि स्यात्। अल्पप्रगत्या तृप्तैः न भवितव्यम्। स्वामी विवेकानन्दः वदति– 'प्रयतन्ताम्, पुनः प्रयतन्ताम्' इति। एतस्य सर्वस्य अयं संक्षेपः यत् प्रयत्नः एव परिपूर्णतायाः आधारभूमिः इति।

सम्पुटः–८  मार्च्–१९९२  सञ्चिका–१२

प्रतिकृतिमूल्यं रू. ४-००  *  वार्षिकं ग्राहकशुल्कं रू. ४८-००

रसप्रश्नाः–

# रावणवधः

(युद्धारम्भानन्तरं बहूनि दिनानि अतीतानि। रावणपक्षीयाः वीराधिवीराः अपि राक्षसाः मरणं प्राप्तवन्तः। इन्द्रजित्-कुम्भकर्णादयः अति वीरस्वर्गं गतवन्तः। अन्ते रावणः एव रणरङ्गम् आगतवान्। वानरान् बहून् मारयन् लक्ष्मणं मूर्च्छितं कृतवान् अपि। ततः राम-रावणयोः घोरं युद्धम् आरब्धम्। एतद्युद्धानन्तरघटनाः आधारीकृत्य वाल्मीकिरामयणकथानुसारम् अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. रावणं जेतुम् उपायं चिन्तयन्तं श्रीरामं कः आदित्यहृदयं बोधितवान्?

(अ) विभीषणः। (आ) अगस्त्यः। (इ) विश्वामित्रः।

II. 'भूमौ स्थितस्य रामस्य, रथस्थस्य रावणस्य च युद्ध न समम्' इति आलोच्य कः रामनिमित्तं सारथिसहितं रथं प्रेषितवान्?

(अ) सूर्यः। (आ) कुबेरः। (इ) देवेन्द्रः।

III. तस्य रथस्य सारथेः नाम किम्?

(अ) अरुणः। (आ) मातलिः। (इ) नलकूबरः।

IV. गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव।। – इत्येषः प्रसिद्धः श्लोकः कैः उक्तः?

(अ) युद्धं पश्यद्भिः वानरैः।
(आ) युद्धं पश्यद्भिः राक्षसैः।
(इ) युद्धं पश्यद्भिः ऋषिदेवगन्धर्वादिभिः।

V. रामेण रावणस्य शिरांसि कतिवारं कर्तितानि?

(अ) दशवारम्। (आ) शतवारम्। (इ) सहस्रवारम्।

VI. रामः रावणं केन अस्त्रेण संहृतवान्?

(अ) आग्नेयास्त्रेण। (आ) ऐन्द्रास्त्रेण। (इ) ब्रह्मास्त्रेण।

उत्तराणि–

I. – (आ). II. – (इ). III. – (आ). IV. – (इ). V. – (आ). VI. – (इ).

वार्ताविशेषः—

# हेल्मट् कोल्वर्याय नेहरूप्रशस्तिः

चतुश्चत्वारिंशद्वर्षेभ्यः पूर्वं स्वातन्त्र्यप्राप्तिसमये अस्माकं देशः विभाजनपीडया पीडितः आसीत्। अत एव इति भाति, षट्चत्वारिंशद्(४६)वर्षेभ्यः पूर्वं विभागं प्राप्तवतोः देशयोः मेलनार्थं प्रयत्नं कृतवन्तं नायकं पुरस्कारदानेन सम्मानयन् अस्ति देशः। १९९० तमवर्षीया एषा प्रशस्तिः डा. हेल्मट् कोल्वर्याय दीयमाना अस्ति, यश्च शान्तिमार्गेण जर्मन्-देशयोः एकीकरणार्थं महान्तं प्रयत्नं कृतवान्। प्रशस्तेः नाम 'नेहरूप्रशस्तिः' इति। एषा अन्ताराष्ट्रियस्तरीया।

नेहरूजन्मदिनसन्दर्भे नवेम्बर् १४ दिनाङ्के एतस्याः प्रशस्तेः घोषणं कृतम्। १९८९ तमवर्षीया नेहरूप्रशस्तिः जिञ्जाब्वेदेशस्य अध्यक्षाय डा. राबर्ट् मुगाबेवर्याय दत्ता, यश्च दक्षिणाफ्रिकास्थं वर्णभेदनीतिं दूरीकर्तुं विशेषप्रयत्नं कृतवान् आसीत्।

जर्मनीदेशस्य अन्तिमः सम्राट् कैसर् विल्हेल्म् (द्वितीयः)। तदनन्तरम् अडोल्फ हिट्लर्वर्यस्य सर्वाधिकारः तत्र आगतः। तदा अपि जर्मनी अखण्डम् आसीत्। १९३१ तमे वर्षे सप्टम्बर्मासे जर्मनीदेशेन पोलेण्ड्देशस्य उपरि आक्रमणं कृतम्। तदा द्वितीयजागतिकयुद्धम् (१९३९-१९४५) आरब्धम्। एतस्मिन् युद्धे जर्मनी पराजयं प्राप्नोत्। हिट्लर् च आत्महत्यया प्राणान् अत्यजत्।

जर्मनी यदा पराधीनः जातः तदा स च देशः चतुर्धा विभक्तः। ते च भागाः अमेरिका, ब्रिटन्, फ्रान्स्, सोवियत् इत्येतषां देशानां सेनायाः अधीनाः जाताः। अनन्तरं पूर्वभागः १९४१ तमे वर्षे 'जर्मन् डेमाक्रटिक् रिपब्लिक्' नाम प्राप्य स्वतन्त्रः जातः। एषः 'पूर्व-जर्मनी' इति उच्यते।

एतस्य राजधानी बर्लिन्। तस्मिन् एव वर्षे 'फेडरल् रिपब्लिक् आफ् जर्मनी' नाम्ना पश्चिमजर्मनीदेशः उदितः। १९५४ तमे वर्षे एषः पूर्णतः स्वतन्त्रः जातः। एतस्य राजधानी बान्।

१९५३ तमे वर्षे पूर्वजर्मनीदेशे विप्लवः यदा उत्पन्नः तदा सोवियत्सेनया स च विप्लवः निगृहीतः। तदनन्तरकाले, पूर्वजर्मनीजनाः पश्चिमजर्मनीं यथा न गच्छेयुः तथा 'बर्लिन्भित्तिः' निर्मिता। यतः तत्काले पश्चिमजर्मनीदेशे अन्यविधा राजकीयपद्धतिः आश्रियमाणा आसीत्।






१९७३ तमे वर्षे पूर्वपश्चिमजर्मनी-देशयोः मध्ये उत्तमः सम्बन्धः स्थापितः अभवत्। १९७६ तमे वर्षे एरिक् होनेकर् पूर्वजर्मनी देशस्य अध्यक्षः जातः। सः सोवियत्देशस्य सहचारी सन् अपि द्वयोः जर्मनीदेशयोः मध्ये मैत्र्याः वर्धनार्थं विशेषप्रयत्नं कृतवान्।

१९९० तमे वर्षे प्रवृत्ते 'युरोपियन् कौन्सिल्'समावेशे डा. कोलद्वारा उपस्थापितः जर्मनीदेशयोः अखण्डताप्रस्तावः सर्वैः सहर्षम् अङ्गीकृतः, प्रोत्साहितः च। ततः आरभ्य डा. कोल् युरोपदेशानां व्यवहारेषु प्राधान्यं प्राप्तवान्। १९९० तमे वर्षे अक्टोबर्मासे ३ दिनाङ्के जर्मनीदेशयोः मेलनं जातम्। महता उत्साहेन आनन्देन च बर्लिन्भित्तिः जनैः उन्मूलिता। इदानीं अष्टकोटिजनसङ्ख्यया युक्तः संयुक्तार्थिकक्रमोपेतः 'संयुक्तजर्मनी' देशः महाशक्तिरूपेण आत्मनः विकासार्थं पदार्पणं कृतवान् अस्ति।

१९९० तमे वर्षे प्रवृत्ते निर्वाचने डा. कोल् जर्मनीदेशस्य अध्यक्षत्वेन निर्वाचितः। तेन कदाचित् एवम् उक्तम्— अन्तः-कलहात् प्रबल-शक्तिमुष्टितः च मुक्तायाः विश्व-व्यवस्थातः मया स्फूर्तिः प्राप्ता, या नेहरूवर्येण महात्म गान्धि वर्येण च प्रतिपादिता इति।

नेहरूप्रशस्तिसमित्या उक्तम् अस्ति यत् द्वयोः जर्मनीदेशयोः एकीभवनं युरोपखण्डस्य इतिहासे नूतनः अध्यायः इति।

देशस्य, जनसमुदायस्य समाजस्य वा विभागः अतीवसुलभः। किन्तु विभक्तयोः एकीकरणं न तावत् सुकरम्। एतया दृष्ट्या कोलवर्यस्य प्रयत्नः नितरां श्लाघ्यः खलु?



# पाण्डित्यं श्रेष्ठम्

वारणपुरस्य राजा विक्रमवर्मा। सः साहित्यप्रियः। सरस्वत्याः अनुग्रहतः एव पाण्डित्यं प्राप्यते इति भावयति सः। ये पण्डिताः तं द्रष्टुम् आगच्छन्ति तान् विशेषतः सत्करोति राजा।

तस्य आस्थाने श्रीमुखः नाम पण्डितः आसीत्। सः आस्थानकविः।

राजा पण्डितान् सम्मानयति यत् तत् मन्त्रिणे देवप्रियाय न रोचते स्म। सः भावयति स्म यत् पाण्डित्यस्य अपेक्षया अपि धनम् एव श्रेष्ठम् इति।

कदाचित् वार्तालापमध्ये राजा विक्रमवर्मा मन्त्रिणं देवप्रियम् उक्तवान्– "मन्त्रिन्! श्रीमुखस्य पाण्डित्यं पश्यतः मम भाति यत् तादृशेन पाण्डित्येन रहितस्य मम जीवनं सर्वथा सारहीनम् इति" इति।

तदा मन्त्री हसन् उक्तवान्– "प्रभो, स्पष्टवचनार्थं क्षन्तव्यः अहम्। भवतः विचारम् अहं न अङ्गीकरोमि। धनस्य पुरतः पाण्डित्यं तृणसमानम्। पाण्डित्यं विना कश्चित् जीवेत्, किन्तु धनं विना जीवनं सर्वथा असाध्यम्। श्रीमुखस्य जीवन-निर्वहणार्थं भवता यदि व्यवस्था कृता न स्यात् तर्हि सः पाण्डित्यमात्रेण किम् अकरिष्यत्?" इति।

मन्त्रिणः वचनं राज्ञे न अरोचत। सः मन्त्रिणम् उक्तवान्– "भवान् साहित्यविषये अधिकं न जानाति। अन्यथा एवं न वदेत् भवान्" इति।

ततः केषाञ्चित् दिनानाम् अनन्तरं राजा मन्त्री च किञ्चन गुरुकुलं द्रष्टुं गतवन्तौ। तत् गुरुकुलं माधवाचार्यः नाम पण्डितः निर्वहति स्म। माधवाचार्यस्य गुरुकुलस्य विद्यार्थिनः प्रतिभाशालिनः प्रसिद्धाः च

"सुभद्रा"



आसन्। अन्येषु गुरुकुलेषु एषा स्थितिः न आसीत्।

राजा विक्रमवर्मा माधवाचार्यं दृष्ट्वा पृष्टवान्– "आर्य, भवतः गुरुकुले ये विद्याभ्यासं कुर्वन्ति ते प्रतिभाशालिनः भवन्ति। एतस्य कारणं किम्?" इति।

तदा माधवाचार्यः मन्दहासपूर्वकम् उक्तवान्– "राजन्, गुरुकुले ये विद्याभ्यासं समापयन्ति तेभ्यः अहं श्रीमुखविरचितं काव्यं पठनार्थं ददामि। यः तत् पठित्वा सम्यक् विमृश्य तत्र दोषं प्रदर्शयति तस्मै प्रमाणपत्रं दीयते" इति।

एतत् श्रुत्वा राजा किञ्चिदिव कुपितः। "एवं तर्हि मम आस्थानपण्डितस्य काव्येषु दोषाणां दर्शनम् एव भवतः विद्यार्थिनां कर्तव्यम्! एतत् तु आस्थानस्य अपमानकरम्" इति उक्तवान् सः।

तदा माधवाचार्यः विनयेन उक्तवान्– "राजन्! श्रीमुखस्य काव्येषु दोषान्वेषणं सुकरं कार्यं न। तत् कर्तुं विशेषपाण्डित्यम् आवश्यकम्। अस्माकं विद्यार्थिनां पाण्डित्यस्य परीक्षार्थं श्रीमुखस्य काव्यं निकषत्वेन उपयुज्यते। एतत् तु भूषणम् एव, न तु दूषणम्। अत्र अपमानस्य का प्रसक्तिः?" इति।

एतत् श्रुत्वा शान्तः राजा माधवाचार्यं पृष्टवान्– "तदस्तु, अद्यावधि भवतः गुरुकुले कति जनाः प्रमाणपत्रं प्राप्तवन्तः?" इति।

"किं वदामि प्रभो, गतवर्षपर्यन्तं प्रतिवर्षं द्वित्राः केवलं प्रमाणपत्रं प्राप्नुवन्ति स्म। एतस्मिन् वर्षे तु पञ्चदश जनाः प्रमाणपत्रं प्राप्तवन्तः। आश्चर्यं नाम एवं प्रमाणपत्रं प्राप्तवत्सु बहवः न तीक्ष्णमतयः, अपि तु सामान्याः" इति उक्तवान् किञ्चिदिव खेदेन माधवाचार्यः।

एतावत्पर्यन्तं सर्वं मौनं शृण्वन् स्थितः मन्त्री देवप्रियः राजानम् उक्तवान्– "अत्र आश्चर्यकरं किमपि नास्ति। पाण्डित्यस्य अपेक्षया अपि धनं श्रेष्ठम् इति वचनं प्रमाणितम् अभवत् अद्य। कश्चन पण्डितः श्रीमुखस्य ग्रन्थे स्थितान् दोषान् सङ्गृह्य एतद्गुरुकुलछात्रेभ्यः दत्त्वा धनं स्वीकृतवान्

स्यात्। अतः एतावन्तः प्रमाणपत्रं प्राप्तवन्तः'' इति।

'मन्त्रिणा यत् उक्तं तत् असम्भाव्यं तु न' इति आलोच्य राजा– ''स्यात् नाम एवम् अपि'' इति उक्त्वा मन्त्रिणा सह मौनं ततः निर्गतवान्।

ततः सप्ताहाभ्यन्तरे राज्ञा गूढचरद्वारा ज्ञातं यत् मन्त्री सम्भाव्य यत् उक्तवान् तत् सत्यम् एव इति।

राजधानीसमीपे रामपुरनामके ग्रामे विष्णुशर्मा नाम पण्डितः आसीत्। सः श्रीमुखस्य काव्येषु स्थितान् दोषान् सङ्गृह्य गुरुकुलछात्रेभ्यः विक्रीय धनं सम्पादयन् आसीत्।

एतत् ज्ञात्वा राजा विक्रमवर्मा विष्णुशर्मणः गृहं गत्वा पृष्टवान्– ''पण्डितोत्तम! भवादृशः एतादृशं कार्यं कर्तुम् अर्हति वा? भवत्कारणतः प्रतिभारहिताः अपि प्रमाणपत्रं प्राप्नुवन्तः सन्ति। एतत् किम् उचितम्? विद्यादेवतायाः अपमाननं कुर्वन् नास्ति वा भवान्? पाण्डित्यस्य दुरुपयोगः एवं किमर्थं क्रियते?'' इति।

तदा विष्णुशर्मा विनयेन नमस्कृत्य उक्तवान्– ''महाप्रभो, अद्य तु महत् सौभाग्यं मम। यतः अद्य मया भवतः दर्शनं प्राप्तम्। इतः पूर्वं भवद्दर्शनार्थम् अहं बहुवारं राजधानीम् आगतवान्। मम पाण्डित्यं दृष्ट्वा असूयां प्राप्य भवदास्थानपण्डितः





श्रीमुखः स्थानच्युतिभीत्या भवद्दर्शनतः मां निवारयति स्म। एवं बहुवारं प्रवृत्तम्। आश्रयं विना मम जीवनं कथं प्रचलेत्? जीवनोपायार्थं मया किमपि करणीयम् आसीत् एव। श्रीमुखस्य असूयापरतां दृष्ट्वा अहं नितरां क्रुद्धः आसम्। पाण्डित्यबलतः श्रीमुखस्य काव्येषु दोषान् अन्वेष्टुम् अहं शक्तवान्। दोषस्थानानि छात्रान् संसूच्य अहं धनं सम्पादितवान्। एतेन जीवननिर्वहणोपायः सिद्धः, प्रतीकारः साधितः अपि। आश्रयहीनस्य मम एवं करणम् अपरिहार्यम् आसीत्। भवता मम पाण्डित्यस्य प्रोत्साहः न दत्तः। अतः अहम् एतेन क्रमेण पाण्डित्यस्य उपयोगं कृतवान्'' इति।

एतत् श्रुत्वा राजा विक्रमवर्मा विना वचनं राजधानीं प्रतिगतवान्। तत्र मन्त्री तम् उक्तवान्– ''प्रभो, यतः पण्डिताः लक्ष्मीनिमित्तं सरस्वत्याः विक्रयणं कुर्वन्ति अतः मया उच्यते– पाण्डित्यस्य अपेक्षया धनम् एव श्रेष्ठम् इति'' इति।

तदा विक्रमवर्मा हसन् उक्तवान्– ''मन्त्रिवर्य! धनं जीवनमार्गं कल्पयेत्। कला तु मनः तोषयेत्, तर्पयेत्, विकासयेत् च। अतः धनस्य कलायाश्च तोलनं न युक्तम्। विष्णुशर्मणा पाण्डित्यस्य विक्रयणं यत् कृतं तस्य कारणम् अस्ति। तस्य जीवनोपायः अस्माभिः न कल्पितः। अतः तेन तथा व्यवहृतम्। यदि जीवनोपायः कल्पितः स्यात् तर्हि सः एवं न अकरिष्यत्। अतः विष्णुशर्मणः कोऽपि दोषः नास्ति। श्रीमुखस्य असूयापरता, स्वार्थभावना च अस्य सर्वस्य हेतुः'' इति।

अनन्तरं राजा विक्रमवर्मा श्रीमुखम् आस्थानपदवीतः च्युतं कृत्वा तस्मिन् स्थाने विष्णुशर्माणं नियोजितवान्। सर्वे पण्डिताः सुलभतया राजदर्शनं प्राप्तुं यथा शक्नुयुः तथा व्यवस्थाम् अपि कृतवान्।

कदाचित् वार्तालापमध्ये राजा विक्रमवर्मा विष्णुशर्माणम् उक्तवान्– ''पण्डितवर्य! इदानीं भवान् आस्थानपण्डितः अस्ति। माधवाचार्यस्य गुरुकुले प्रमाणपत्रं ये प्राप्तुम् इच्छन्ति ते इतः परं भवतः काव्यम् अधीत्य दोषम् अन्विष्येयुः इति नियमं करिष्यामि

अहम्'' इति।

तदा विष्णुशर्मा उक्तवान्– ''प्रभो, एवं मास्तु। एतावत्पर्यन्तम् अहं यत् कृतवान् तदेव अन्यः कश्चित् कुर्यात् अपि। अतः कस्यापि काव्यस्य दोषदर्शनप्रवृत्तिः मास्तु इति मम आशयः'' इति।

तदा विक्रमवर्मा उक्तवान्– ''भवता तु जीवननिर्वहणार्थं पूर्वम् अल्पः प्रमादः कृतः स्यात्। किन्तु इदानीं कोऽपि पण्डितः मम दर्शने क्लेशं न अनुभवति इत्यतः पण्डितेषु कोऽपि जीवननिर्वहणे क्लेशम् अनुभवितुं न अर्हति। अतः पूर्वं यथा प्रवृत्तं तथा पुनः न प्रवर्तेत एव। एवं स्थिते भवतः काव्यं दोषान्वेषणनिमित्तम् उपयुक्तं चेत् का हानिः?'' इति।

''मम काव्यस्य उपयोगे मम असम्मतिः इति न। वस्तुतः तु दोषान्वेषणप्रवृत्तेः प्रोत्साहः एव मास्तु इति मम आशयः'' इति उक्तवान् विष्णुशर्मा।

''भवदीयं काव्यं दोषान्वेषणार्थम् उपयुक्तं चेत् समर्थाः दोषान् अन्विष्येयुः इति भीतिः वा?'' इति हसन् पृष्टवान् राजा।

''मदीयेषु काव्येषु दोषाणाम् अन्वेषणम् असन्तोषाय भवति इति तु सत्यम् एव। किन्तु दोषान्वेषणम् एव मास्तु इति मम कथनस्य कारणं तत् न। प्रभो, आस्थानपण्डितः एकः एव महाविद्वान् इति नास्ति खलु? अतः प्रमाणपत्रप्राप्त्यर्थम् एकस्य कस्यचित् पण्डितस्य ग्रन्थस्य परिशीलनं, तत्र दोषान्वेषणं वा मास्तु। प्रमाणपत्रेच्छवः उत्तमान् ग्रन्थान् पठित्वा तस्य विमर्शनं कृत्वा वैशिष्ट्यं प्रतिपाद्य स्वाभिप्रायं प्रकटयन्तु। तदा ते वर्धन्ते। केवलदोषान्वेषणेन न किमपि प्रयोजनम्। अतः उत्तमः ग्रन्थविमर्शः प्रमाणपत्रप्राप्तौ कारणं भवतु'' इति निवेदितवान् विष्णुशर्मा।

''योग्यं वचनम् उक्तं भवता'' इति उक्त्वा राजा विक्रमवर्मा, ग्रन्थविमर्शः एव प्रमाणपत्रप्राप्तौ कारणं यथा भवेत् तथा व्यवस्थां कृतवान्।



# साहसकार्यम्

धर्मपुरनामके ग्रामे केशवः नाम कश्चित् आसीत्। सः कदाचित् क्रूरमृगयुते घोरारण्ये आरात्रि स्थित्वा प्रातः गृहं प्रत्यागतवान्। एतत् साहसकार्यं तद्ग्रामीणेन भूस्वामिना श्रुतम्। भूस्वामी चिन्तितवान् यत् एतादृशः साहसी अवश्यं पुरस्करणीयः इति। अतः सः केशवम् आनयतु इति आदिश्य सेवकं केशवगृहं प्रति प्रेषितवान्।

तत्समये केशवः गृहे न आसीत्। भूस्वामिसेवकः सर्वम् अपि केशवपत्नीं निवेदितवान्। सर्वं श्रुत्वा केशवपत्नी उक्तवती– "एषा वार्ता भूस्वामिना अपि ज्ञाता? मम पतिः ह्यः सम्पादितं धनं द्यूते व्ययीकृतवान् आसीत्। मम पुरतः स्थातुं धैर्यम् अप्राप्नुवन् सः अरण्ये स्थित्वा रात्रिं यापितवान्। दिनद्वये यावत् सम्पाद्यते तावत् धनं सम्पाद्य एव अद्य भवान् गृहं प्रत्यागच्छतु इति आदिश्य तं प्रेषितवती अस्मि। अतः भूस्वामिनं वदतु यत् पुरस्कारः मह्यम् एव दातव्यः इति" इति।

सेवकः भूस्वामिनं दृष्ट्वा सर्वं निवेदितवान्। सर्वं श्रुत्वा मन्दहासपूर्वकम् उक्तवान् भूस्वामी– "साहसकार्ये या केशवं प्रेरितवती तस्यै एव पुरस्कारस्य दानम् उचितम्" इति।





# अपूर्वस्य साहसगाथा

## ११

(दिव्यानन्दमुनेः आदेशस्य अनुगुणं दुष्टानां निग्रहणार्थम् अपूर्वः हिमालयतः रुद्रपुरम् आगतवान्। युवराज्ञयाः कृष्णकुमार्याः कण्ठे स्थितस्य हारस्य मध्ये स्थितं महिमान्वितं चन्द्रकान्तमणिम् अपहर्तुम् इच्छन् दुष्टः मान्त्रिकः मुख्यमन्त्रिणा सह समालोचनं कुर्वन् आसीत्। अपूर्वः रहसि निलीय स्थित्वा तयोः सम्भाषणम् आद्यन्तं श्रुतवान्। अतः मान्त्रिकस्य दुष्टविचाराः अपूर्वेण सम्यक् ज्ञाताः। तदनन्तरम्.....)

महादुष्टः मान्त्रिकः यदा मुख्यमन्त्रिणः रहस्यप्रकोष्ठात् बहिः आगतवान् तदा मध्यरात्रः अतीतः आसीत्। मान्त्रिकः कृष्णवर्णीयं वस्त्रं धृतवान् आसीत्। तस्य दीर्घाः केशाः श्मश्रु चापि कृष्णवर्णीयाः आसन्। अतः अन्धकारे तस्य अभिज्ञानं कष्टकरम् आसीत्। अपूर्वः विना शब्दं मान्त्रिकम् अनुसरन् अस्ति। कश्चित् अनुसरन् अस्ति इति तु मान्त्रिकः न जानाति।

मान्त्रिकः चन्द्रकान्तमणिं स्वीकृत्य कीदृशीं पूजां करिष्यति? पूजां कः कारयति? पूजास्थलं कुत्र स्यात्? इत्येतादृशान् अंशान् ज्ञातुम् इच्छन् अपूर्वः मान्त्रिकम् अनुसृतवान् अस्ति। पादध्वनिः यथा अन्येन न श्रुयेत तथा विशेषजागरूकताम् आश्रितवान् अस्ति अपूर्वः। मान्त्रिकस्य दृष्टिः श्रवणशक्तिः च



यद्यपि तीक्ष्णा, तथापि सः अपि अपूर्वेण क्रियमाणम् अनुसरणं न ज्ञातवान्।

नगरसीमायाः अतिक्रमणस्य अनन्तरं मार्गस्य पार्श्वे स्थितात् गुल्मतः कश्चन विशालकायः भल्लूकः आगत्य मान्त्रिकस्य पुरतः विनयेन अतिष्ठत्। मान्त्रिकः तस्य उपरि उपविश्य बलात् तस्य कर्णलुण्ठनं कृतवान्। तदा भल्लूकः महता वेगेन अरण्यम् अभिलक्ष्य अधावत्।

वेगेन गमनं तु अपूर्वेण अपि ज्ञातम् एव खलु? अतः सः अपि धावन् भल्लूकम् अनुसृतवान्।

अल्पे एव काले तैः लघुनद्याः तीरं प्राप्तम्। मान्त्रिकः भल्लूकात् अवतीर्य कोपेन भल्लूकस्य कर्णलुण्ठनं कृत्वा– "अये, एषु दिनेषु अलसः जातः अस्ति भवान्। धावने वेगः न्यूनः दृश्यते। गच्छतु तावत् इदानीम्। वेतालवटवृक्षस्य समीपे तिष्ठन् मम प्रतीक्षां करोतु। अचिरात् एव अहं तत्र आगमिष्यामि" इति उक्तवान्।

भल्लूकः लघुगर्जनेन अङ्गीकारं संसूच्य ततः निर्गत्य अन्धकारे निलीनः अभवत्। भल्लूकस्य स्थितिं दृष्ट्वा खिन्नः अपूर्वः। यतः तेनापि प्राणिनां द्वारा कार्याणि कार्यन्ते। किन्तु कदापि एवं निर्दयं व्यवहारः तु न क्रियते। प्रीत्या आदरेण दृश्यन्ते ते। अतः एव ते प्राणिनः अपि अपूर्वेण सह प्रीत्या आदरेण च व्यवहरन्ति। 'एषः मान्त्रिकः मन्त्रबलात् एतान् प्राणिनः वशीकृतवान् अस्ति। दर्पेण नैष्ठुर्येण च एतेषां द्वारा कार्यं कारयति' इति आलोचितवान् अपूर्वः।

नदीतीरं प्राप्य मान्त्रिकः कमपि मन्त्रं जपितवान्। मन्त्रजपस्य अनन्तरं त्रिवारं करताडनं कृतवान्। तावता नदीजलं द्विधाः विभज्य तरन् कश्चन मकरः मान्त्रिकस्य समीपम् आगच्छत्। मान्त्रिकस्य पुरतः विनयेन अतिष्ठत् च।

मान्त्रिकः मकरस्य उपरि उपविश्य आज्ञापितवान्– "अये, त्वरया गच्छतु रे" इति।

मकरः पश्चिमदिशि वायुवेगेन तरन् बाणः इव वेगेन अगच्छत्। अपूर्वः अपि तम्



दुर्गमेन नदीमार्गेण गच्छन् मकरः सुरङ्गमयं मार्गं प्राविशत्। अनन्यगतिकः अपूर्वः अपि नद्याम् अवतीर्य तरन् सुरङ्गमार्गं प्रविष्टवान्। वेगेन तरन् अपि अपूर्वः अल्पं शब्दम् अपि न करोति।

मकरः सुरङ्गमुखप्रदेशे अतिष्ठत्। मान्त्रिकः मकरात् उत्प्लुत्य तीरस्थायाः शिलायाः उपरि अतिष्ठत्।

''कः तत्र?'' इति तीक्ष्णः कठोरः च कण्ठध्वनिः गुहातः निर्गतः।

एतादृशः विचित्रः कण्ठस्वरः अपूर्वेण इतः पूर्वं न श्रुतः आसीत्। स च स्वरः कस्याश्चित् वृद्धायाः इव भासते स्म। 'दुर्गमे अस्मिन् प्रदेशे वृद्धायाः स्वरः कथम्?' इति आश्चर्यम् अनुभूतवान् अपूर्वः।

''भवत्याः पादसेवकः वीरविकटः अस्मि। अन्तः आगच्छामि वा अहम्?'' इति अपृच्छत् मान्त्रिकः।

''भवतः आगमनं तु ज्ञातम्। भवन्तम् अनुसृत्य आगतः सः अपरः कः? भवता सह सः किमर्थम् आगतः?'' इति तर्जनस्वरेण पृष्टवती वृद्धा।

''मां मम वाहनं मकरं च विना अन्यः कोऽपि जीवी नास्ति अत्र अम्ब!'' इति उक्तवान् मान्त्रिकः।

''मूर्ख! परितः दृष्ट्वा वदतु। कोऽपि भवन्तम् अनुसृत्य आगतः इव दृश्यते खलु?'' इति उक्तवती वृद्धा।

एव अनुसरन् तीरे एव अधावत्।

आकाशे चन्द्रः रेखामात्रं दृश्यते स्म। तत्र तत्र नक्षत्राणि विराजन्ते। नदीम् उभयतः गुल्माः वृक्षाः च प्रवृद्धाः सन्ति। तदा तदा शृगालरवः श्रूयते स्म। उलूकानाम् घूङ्कारः अपि श्रूयते तदा तदा। व्याघ्रगर्जनम् अपि श्रूयते कदाचित्। किन्तु अपूर्वः भीतिं नाम्ना अपि न जानाति खलु? अतः सः तीरे वेगेन धावन् मान्त्रिकम् अनुसृतवान्।

एवं बहुदूरं गमनानन्तरं नदी द्विधा विभक्ता अभवत्। नद्याः अन्यतरा शाखा नितरां कृशा दुर्गमा च। अग्रे गता सा नदीशाखा उन्नतपर्वतयोः मध्ये प्रवहति। अत्र तु नदीशाखायाः गभीरता अत्यधिका।

'गुहास्था वृद्धा मम आगमनम् अपि ज्ञातुं समर्था तीक्ष्णमतिः' इति आलोच्य अपूर्वः गुरुणा उपदिष्टस्य अदृश्यकारकस्य मन्त्रस्य साहाय्येन अदृश्यतां गतवान्।

मान्त्रिकः परिवृत्य यदा सर्वत्र दृष्टवान् तदा कोऽपि न दृष्टः तेन।

"अम्ब! कोऽपि नास्ति अत्र। मां मकरं च विना अन्यः कोऽपि जीवी न दृश्यते" इति उक्तवान् मान्त्रिकः।

"अलं व्यर्थचर्चया। अन्तः आगच्छतु तावत्" इति आज्ञास्वरेण उक्तवती वृद्धा।

मान्त्रिकः वीरविकटः गुहायाः अन्तः गतवान्। अपूर्वः मन्दम् अपरां शिलाम् आरुह्य शिलानां मध्ये गच्छन् गुहां प्रविष्टवान्।

वृद्धा मानवकपाले स्थिते अग्नौ विशिष्टं चूर्णं पातयन्ती पीतकान्तियुक्तम् अग्निं वर्धयन्ती भित्तिम् आलम्ब्य पादौ प्रसार्य उपविष्टवती आसीत्।

तस्याः वृद्धायाः वयः कियत् इति निश्चयेन वक्तुं न शक्यते। तथापि तया त्रिशताधिकाः वसन्ताः दृष्टाः इत्यत्र तु नास्ति सन्देहः। तस्याः शरीरे चर्म अस्थिपञ्जरं च दृश्यते, नान्यत् किमपि। तस्याः चर्म वलयितम् आसीत्। तथापि शरीरे विशिष्टा कान्तिः दृश्यते स्म। तस्याः भीतिजनके नेत्रे सुविशाले रक्ते घोरे च। अङ्गुलीषु दीर्घाः नखाः दृश्यन्ते स्म। अतः तस्याः हस्तौ पादौ च



सर्पभ्रमं जनयन्ति स्म।

"का वार्ता? भवतः प्रयत्नः फलितः वा?" इति पृष्टवती मन्त्रवादिनी वृद्धा।

मान्त्रिकः वीरविकटः तां साष्टाङ्गं नमस्कृत्य– "अम्ब! इष्टं फलितम् इव। स च विशिष्टः मणिः इदानीं राजकुमार्याः कण्ठे अस्ति। अचिरात् एव मम हस्तगतः भविष्यति च" इति निवेदितवान्।

"एकः एव मणिः भवतः हस्तगतः भविष्यति, उत...." इति कटाक्षेण वीरविकटं पश्यन्ती पृष्टवती मन्त्रवादिनी वृद्धा।

किम् उत्तरं वक्तव्यम् इति अजानन् वीरविकटः मौनम् आश्रितवान्। तस्य अवस्थां दृष्ट्वा वृद्धा विकटाट्टहासेन गुहां



किमपि प्रयोजनं नास्ति खलु? मम प्रयोजनम् अपि भवता चिन्तनीयं खलु?" इति उक्तवती मन्त्रवादिनी।

"अम्ब! त्रिशतं वर्षाणि यावत् भवती सार्थकं जीवनं यापितवती। अतः इतः परं भवत्याः जीवने का आशा स्यात्? परोपकारः एव भवत्याः प्रयोजनम् इति अहं भावयामि" इति उक्तवान् मान्त्रिकः वीरविकटः।

"हुँ, परोपकारः! तादृशाः शब्दाः मम जीवने निरर्थकाः! भवान् किमपि महत् कार्यं साधयितुम् इच्छति। अहम् अपि तादृशम् एव महत् कार्यं साधयितुम् इच्छामि। किन्तु तस्य साधने मार्गं जानती अपि अहं शरीरेण असमर्था। वार्धक्येन जर्झरितम् अस्ति मदीयं शरीरम्। अतः मम इष्टस्य साधनार्थं भवतः साहाय्यम् इच्छन्ती अहं भवतः कार्ये साहाय्यं कुर्वती अस्मि। स्वकार्यस्य सिद्धेः अनन्तरम् अपि भवान् मया कृतम् उपकारं स्मरेत् इति भावयामि अहम्" इति उक्तवती मन्त्रवादिनी।

"अम्ब! भवत्याः उपकारं विस्मरेयं वा अहम्? आजीवनं भवत्याः उपकारं स्मरामि एव" इति विनयातिशयं प्रदर्शयन् उक्तवान् मान्त्रिकः।

"एतादृशेन उपचारवचनेन अलम्। मया यादृशः उपकारः क्रियते तादृशः एव प्रत्युपकारः अपि इष्यते। स्मरतु एतत्" इति उक्तवती मन्त्रवादिनी।

"भवती कीदृशं प्रतिफलम् इच्छति? स्पष्टं

प्रतिध्वनितां कृतवती।

"भवत्याः आशयः मया सम्यक् न ज्ञातः। चन्द्रकान्तमणिना सह मया अन्यः कोऽपि मणिः आनेतव्यः आसीत् वा?" इति पृष्टवान् वीरविकटः।

"अथ किम्? चन्द्रकान्तमणिः भवतः दृष्ट्या मूल्यवान् स्यात् नाम। किन्तु तावन्मात्रस्य आनयनेन किं प्रयोजनम्?" इति उक्तवती मन्त्रवादिनी वृद्धा।

"अम्ब! प्रयोजनं किमर्थं न स्यात्? मणिः आनीतः चेत् भवन्तं चक्रवर्तिनं करिष्यामि इति भवत्या एव खलु उक्तम्? चक्रवर्तित्वप्राप्तिः किं प्रयोजनं न?" इति पृष्टवान् मान्त्रिकः।

"तत् तु प्रयोजनं भवता प्राप्यते। तेन मम

वदतु तावत्'' इति उक्तवान् मान्त्रिकः वीरविकटः।

''मम तु एका एव आकांक्षा– गतं यौवनं कथमपि पुनः प्राप्तव्यम् इति। अतः भवता चन्द्रकान्तमणिना सह युवराज्ञी अपि आनेतव्या। सा मम पादयोः पुरतः पातनीया। तस्याः यौवनं चूषामि अहम्। मम एताः त्रिशतवर्षीयाः दंष्ट्राः तस्याः शरीरे स्थितं समग्रं सारं चूषन्ति'' इति उक्त्वा विकटाट्टहासं कृतवती मन्त्रवादिनी।

तस्याः विचत्रां घोराम् अपेक्षां श्रुतवतः अपूर्वस्य शरीरे कम्पनम् उत्पन्नम्। 'एषा वृद्धा न सामान्या। भयजनिका अस्ति एतस्याः अपेक्षा' इति आलोचितवान् सः।

''अम्ब! इतः पूर्वं भवत्या वह्वीनां युवतीनां रक्तं चूषितम्। तथापि भवत्या यौवनं तु न प्राप्तम्। अतः राजकुमार्याः शरीरसारस्य चूषणेन किं प्रयोजनम्?'' इति पृष्टवान् वीरविकटः।

''निराशादायकानि वचनानि मा वदतु। पूर्वतनप्रयत्नाः विफलाः यत् तत्र अन्यत् एव कारणम् अस्ति। पूर्वम् आनीताः युवत्यः राजभोगेन वर्धिताः न आसन्। एतस्मिन् सन्दर्भे मम यत्नः फलेत् एव इति मम दृढः विश्वासः। रुद्रपुर्याः राजकुमार्यां कृष्णकुमार्यां मया अपेक्षिताः गुणाः सन्ति। अतः तस्याः शरीरस्थं यौवनं चूषित्वा अहं यौवनं प्राप्य लोकैकसुन्दरी भविष्यामि। सर्वान् भोगान् अनुभविष्यामि'' इति सोन्मादम् उक्तवती मन्त्रवादिनी।

''भवती इदानीम् अपि सुन्दरी एव अस्ति'' इति उक्तवान् वीरविकटः।

''अये। एतादृशानि मुखस्तुतिवचनानि मह्यं न रोचन्ते। एतादृशेन व्यवहारेण मां वशीकर्तुं न अर्हति भवान्। यत् मया इष्टं तत् करोतु प्रथमम्। तेन अहं सन्तुष्टा भवामि, न तु एतादृश्या मुखस्तुत्या। अतः प्रथमं कार्ये उद्युक्तः भवतु। गच्छतु तावत् कार्यसाधनाय'' इति उक्तवती मन्त्रवादिनी।

–(अनुवर्तते)



# राज्ञः पाचकः

सिंहकेतुः नाम राजा पूर्वम् आसीत्। परमेशः तस्य पाचकः आसीत्। सः राज्ञः निमित्तं केवलं पचति स्म। अतः सर्वे तं 'राज्ञः पाचकः' इति वदन्ति स्म। कदाचित् राज्ञयाः अनुजः भगिनीं द्रष्टुम् आगतः। तदा राज्ञी परमेशम् उक्तवती यत् अद्य मम अनुजाय अपि पाकं सज्जीकरोतु इति। किन्तु परमेशः एतत् स्पष्टैः वचनैः निराकृतवान्। तदा कुपिता राज्ञी भटान् आज्ञापितवती यत् एतं बद्ध्वा नीत्वा महाराजस्य पुरतः उपस्थाप्य एतस्य औद्धत्यं निवेदयन्तु इति।

राजा भटैः निवेदितं श्रुत्वा परमेशं पृष्टवान्– "किमर्थं भवान् राज्ञयाः आज्ञां धिक्कृतवान्?" इति। तदा परमेशः उक्तवान्– "प्रभो, अहं राज्ञः भवतः पाचकः। अतः भवदर्थं केवलं पाकं करोमि, न तु अन्यस्य निमित्तम्" इति।

परमेशेन या राजभक्तिः प्रदर्शिता तां दृष्टवतः राज्ञः महान् सन्तोषः जातः। 'परमेशेन या राजभक्तिः प्रदर्शिता सा आस्थाने सर्वेषां पुरतः वक्तव्या' इति चिन्तयन् राजा परमेशम् उक्तवान्– "भोः, अहं भवते शतं रजतनाणकानि दास्यामि। भवान् राज्ञयाः अनुजस्य निमित्तं पाकं करोतु" इति।

अङ्गीकारपूर्वकं शिरः चालयन् उक्तवान् परमेशः– "यथाज्ञापयति प्रभुः" इति।

एतत् श्रुत्वा आश्चर्येण पृष्टवान् राजा– "सद्यः एव भवता उक्तं यत् अहं राजनिमित्तं केवलं पाकं करोमि, न तु अन्यस्य निमित्तम् इति। इदानीं तु शतं रजतनाणकानि प्राप्यन्ते इति मत्वा अन्यनिमित्तम् अपि पाकं कर्तुं सिद्धः जातः। किम् एतत् उचितम्?" इति।

तदा परमेशः उक्तवान्– "प्रभो, अहं भवतः सेवकः। अतः भवदर्थं केवलं पाकं करोमि। अतः एव अन्यस्य निमित्तं पाककरणं निराकृतवान् अहम्। इदानीं तु भवान् एव वदन् अस्ति– अन्यस्य निमित्तं पाकं करोतु इति। भवतः वचनं शिरोधार्यं मम। अतः एतत् अङ्गीकृतम्। अङ्गीकारे धनलोभः न कारणम्" इति।

सन्तुष्टः राजा सिंहकेतुः तस्मै द्विशतं रजतनाणकानि दत्तवान्।






# नियमभङ्गः

कथाकथनकौशलेन कोऽपि माम् अतिशेतुं यथा न शक्नुयात् तथा मया निरन्तरप्रयत्नः करणीयः इति चिन्तयन्तम् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान्।

तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवतः सङ्कल्पदृढतां, साहसप्रियतां, सहनशीलतां च स्मरन् अहं बह्वीः कथाः स्मरामि। हाँ, अद्यापि मया श्रीचन्द्रस्य कथा स्मृता। श्रीचन्द्रः कश्चन दृढमतिः, नियमपालनातत्परः च। किन्तु तेन कदाचित् नियमभङ्गः कृतः। न जाने, तत्र वास्तविकं कारणं किम् इति। तस्य कथां विस्तरेण श्रावयामि। कथां श्रुत्वा तदीयनियमभङ्गस्य वास्तविकं कारणं किम् इति भवान् एव

## वेतालकथा



श्रीचन्द्रः कलायाम् अपि आसक्तः। तावदेव न, स्वयं निपुणः कलाकारः अपि सः। प्राचीनानां शिल्पानां, चित्रपटानां, विविधानाम् आभरणानां, खड्गादीनाम् आयुधानां च सङ्ग्रहणे तस्य विशेषासक्तिः। अतः सः महता धनव्ययेन बहूनि प्राचीनवस्तूनि सङ्गृह्य विशिष्टं प्राच्य-वस्तुसङ्ग्रहालयम् आयोजितवान् आसीत्। तस्य प्राच्यवस्तुसङ्ग्रहालयस्य व्यवस्थार्थं बहून् सेवकान् नियोजितवान् आसीत् अपि।

यद्यपि श्रीचन्द्र-जयचन्द्रयोः महती मैत्री आसीत्, तथापि श्रीचन्द्रस्य एकः गुणः जयचन्द्राय न रोचते स्म। श्रीचन्द्रः स्वसङ्ग्रहालये स्थितम् एकम् अपि वस्तु अन्यस्मै न ददाति। राजा स्वयं पृच्छति चेदपि 'न ददामि' इत्येव उत्तरं श्रीचन्द्रस्य। 'कृपया मम सङ्ग्रहालयस्थं वस्तु किमपि मा पृच्छतु' इति सविनयं राजानं जयचन्द्रं वदति स्म श्रीचन्द्रः।

कदाचित् कश्चन तरुणः श्रीचन्द्रस्य गृहम् आगतवान्। तस्य हस्ते कश्चन पटबन्धः आसीत्। तेन धृतानि मलिनानि वस्त्राणि, तस्य मुखस्य कान्तिं च दृष्ट्वा एव श्रीचन्द्रः ज्ञातवान् यत् एषः दुरवस्थाम् आपन्नः कश्चन धनिककुलजातः इति। श्रीचन्द्रः तं स्वागतीकृत्य आदरेण सम्भाष्य उपवेष्टुम् आसनं दत्तवान्।

तदा युवकः उक्तवान्– ''श्रीमन्! मम वेषं

निर्णयतु। प्रथमं कथां श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालः कथाम् आरब्धवान्–

''स्वर्णदीपिकानगरे कोट्यधीशः कश्चन धनिकः आसीत्। तस्य नाम श्रीचन्द्रः इति। श्रीचन्द्रः उदारः। प्रार्थयिता तृप्तः यथा भवेत् तथा दानं करोति सः।

महाराजस्य जयचन्द्रस्य धनिकस्य श्रीचन्द्रस्य च महती मैत्री। राज्ञः धनागारे यदा धनं न भवति तदा श्रीचन्द्रः एव राज्ञे ऋणरूपेण धनं ददाति। यदा करसङ्ग्रहः भवति तदा राजा वृद्धिसहितम् ऋणं प्रत्यर्पयति। एवंक्रमेण प्राप्तं वृद्धिधनं निर्धनेभ्यः ददाति स्म श्रीचन्द्रः।

दृष्ट्वा बहवः जुगुप्सां प्रकटयन्ति। भवान् तु मद्विषये विशेषादरं प्रकटितवान्। मम नाम शिवदत्तः इति। अहं भूस्वामिकुले जातः। प्राच्यवस्तुसङ्ग्रहे भवान् आसक्तः इति मया श्रुतम्। मम समीपे प्राचीनः कश्चन चित्रपटः अस्ति। एतत् परिशील्य एतस्य योग्यं मूल्यं निश्चिनुयात् भवान् इति मम विश्वासः" इति। अनन्तरम् आवरणम् अपनीय एकं तैलवर्णीयं चित्रपटं प्रदर्शितवान् सः।



चित्रं दृष्ट्वा श्रीचन्द्रः आश्चर्यचकितः। तस्मिन् तैलवर्णचित्रे काचित् माता शिशुं लालयन्ती अस्ति। चित्रे वर्णसंयोजनम् अपूर्वम् आसीत्।

चित्रं सुसूक्ष्मं परिशील्य पृष्टवान् श्रीचन्द्रः– "एतत् काल्पनिकं चित्रं न इति मम अभिप्रायः। कस्याश्चित् प्रतिकृतिः एषा। एवं ननु?" इति।

"भवतः तर्कः युक्तः एव। चित्रे दृश्यमाना मम माता एव। स च शिशुः अहम्। एतत् चित्रं यः चित्रितवान् तस्मै चित्रकाराय मम पिता सुविशालां भूमिम् उपायनरूपेण दत्तवान् आसीत्। तादृशम् आढ्यं मम कुटुम्बम् इदानीं सर्वथा दुःस्थितौ अस्ति। अतः अहम् उदरपोषणार्थम् एतस्य अत्यमूल्यस्य प्रीतिपात्रस्य अपि चित्रस्य विक्रयणं कुर्वन् अस्मि" इति उक्त्वा शिवदत्तः चिन्तया दीर्घं निःश्वसितवान्।

"चिन्तां मा करोतु मित्र! एतत् चित्रम् अहं प्राणसमानं भावयित्वा रक्षिष्यामि। चित्रं तु अत्यमूल्यम् अस्ति। अतः चित्रस्य मूल्यस्य निर्णेता न अहम्, अपि तु भवान् एव। भवन्तं मम धनागारं नयामि। भवान् यावदिच्छति तावत् स्वीकरोतु" इति उक्त्वा श्रीचन्द्रः शिवदत्तं धनागारं नीतवान्।

शिवदत्तः धनागारतः शतं रजतनाणकानि स्वीकृत्य– "एतावत् पर्याप्तम्। एतत् धनं मूलधनत्वेन उपयुज्य वाणिज्यं करिष्यामि। दैवानुग्रहः यथा अस्ति तथा भवतु" इति उक्तवान्।

तदा श्रीचन्द्रः– "अपूर्वं चित्रं दत्त्वा एतावत् अल्पं धनं स्वीकृतवान् खलु भवान्? लक्षं रजतनाणकानि वा स्वीकरोतु कृपया"



इति उक्तवान्।

शिवदत्तः अधिकधनस्य स्वीकरणं विनयेन निराकृत्य श्रीचन्द्रस्य आशीर्वादं प्राप्य ततः निर्गतवान्।

श्रीचन्द्रः आत्मना क्रीतं तत् अपूर्वं चित्रं सङ्ग्रहालये स्थापितवान्। कदाचित् श्रीचन्द्रस्य गृहम् आगतः राजा जयचन्द्रः एतत् चित्रं दृष्टवान्। चित्रेण आकृष्टः सः श्रीचन्द्रम् उक्तवान्– "मित्र! एतत् चित्रम् अपूर्वम्अस्ति। एतत् दृष्ट्वा अपि अस्वीकृत्य प्रतिगन्तुं न इच्छामि अहम्। अतः एतत् चित्रं मह्यं ददातु। भवान् यावत् इच्छति तावत् धनम् अहं ददामि एव। अथवा एतत् चित्रं कानिचन दिनानि यावत् वा मम अन्तःपुरं प्रेषयतु। एतत् मा निराकरोतु कृपया" इति।

तदा श्रीचन्द्रः– "प्रभो, भवता अविदितं किम् अस्ति? मम सङ्ग्रहालयं प्रविष्टं वस्तु किमपि कदापि अन्यत्र न गच्छेत् इति मम नियमः। क्षन्तव्यः अहम्" इति।

कानिचन वर्षाणि अतीतानि। कदाचित् श्रीचन्द्रः राज्ञा जयचन्द्रेण सह वार्तालापं कुर्वन् आसीत्। तदा तत्र शिवदत्तः आगतः। श्रीचन्द्रः तम् आदरेण स्वागतीकृत्य राज्ञे तं परिचाय्य– "इदानीं कथम् अस्ति भवान्?" इति शिवदत्तं पृष्टवान्।

"श्रीमन्! भवत्तः स्वीकृतानि शतं रजतनाणकानि मूलधनत्वेन उपयुज्य मया वाणिज्यम् आरब्धम्। दैवानुग्रहात् इदानीम् अहं लक्षाधीशः अस्मि। इदानीं भवतः साहाय्यं प्रार्थयितुम् आगतः अस्मि" इति उक्तवान् शिवदत्तः।

"मया कीदृशं साहाय्यं करणीयम्?" इति पृष्टवान् श्रीचन्द्रः।

शिवदत्तः विनयेन उक्तवान्– "यस्मिन् दिने मया मातुः चित्रपटः विक्रीतः तस्मात् दिनात् आरभ्य मम मनःशान्तिः नष्टा। अतः 'चित्रपटं प्रतिददातु' इति प्रार्थयितुम् अहम् अत्र आगतः। चित्रं मया कथमपि प्राप्तव्यम् एव। भवान् यावत् इच्छति तावत् धनं दातुं सिद्धः अहम्" इति।

श्रीचन्द्रस्य इदानीं कष्टकरी स्थितिः। सङ्ग्रहालयं प्रति आगतस्य वस्तुनः प्रतिदानं तस्य इष्टाय न। एतेन एव कारणेन सः राज्ञे

चित्रपटस्य दानं निराकृतवान्। एवं स्थिते इदानीं, तत्रापि राज्ञः पुरतः एव, चित्रपटः दत्तः चेत् राजा कुपितः भवेत् एव खलु?

श्रीचन्द्रः इदानीं किं करणीयम् इति चिन्तयन् अस्ति। 'भवते दातुं न शक्नोमि इति माम् उक्तवान् एषः इदानीं किं वा कुर्यात्?' इति कुतूहलेन पश्यन् अस्ति राजा अपि।

क्षणकालस्य चिन्तनस्य अनन्तरं श्रीचन्द्रः शिवदत्तम् उक्तवान्– "सकृत् स्वीकृतं वस्तु मया न प्रतिदीयते इति मम नियमं जानाति खलु भवान्? अतः चित्रपटस्य प्रतिदानम् अशक्यम् एव। कृपया क्षन्तव्यः अहम्" इति।

एतत् श्रुत्वा खिन्नः शिवदत्तः दैन्येन– "श्रीमन्! सर्वेषाम् अपि नियमानाम् अपवादः कश्चन भवति एव। एकः अपवादः अस्ति चेत् नियमस्य विशेषभङ्गः कोऽपि न भवति। मातुः प्रतिकृतिः एतत् चित्रं मम प्राणसमम्। अतः कृपया मह्यं तत् प्रतिददातु" इति प्रार्थितवान्।

एतादृशं दैन्यं दृष्टवतः श्रीचन्द्रस्य हृदये अपि करुणा उत्पन्ना। सः क्षणकालम् आलोच्य उक्तवान्– "शिवदत्त! भवतः मातृप्रीतिं मनसि निधाय अहं नियमभङ्गं सकृत् कर्तुं सिद्धः अस्मि। अहम् अपि चित्रकलानिपुणः। भवता यादृशं चित्रं दत्तं तादृशम् एव अहम् अपि लेखिष्यामि। तयोः द्वयोः मूलकृतिः का इति भवता



अभिज्ञातव्यम्। एवम् अभिज्ञातं चेत् सा कृतिः भवते दीयते। एतस्यां परीक्षायां न्यायनिर्णायकः अस्माकं महाराजः एव" इति।

शिवदत्तः एतत् अङ्गीकृतवान्। 'तर्हि पञ्चदशदिनानाम् अनन्तरम् आगच्छतु' इति उक्त्वा शिवदत्तं प्रेषितवान् श्रीचन्द्रः। अनन्तरं पञ्चदशदिनात्मके अवधौ शिवदत्तचित्रसदृशम् अपरं चित्रं सज्जीकृतवान् श्रीचन्द्रः।

श्रीचन्द्रेण सूचितस्य अवधेः अनन्तरं तदीयं गृहं गतवान् शिवदत्तः। जयचन्द्रः अपि तत्र उपस्थितः आसीत्। श्रीचन्द्रः शिवदत्तस्य पुरतः चित्रद्वयम् आनीय स्थापितवान्। तदुभयम् अपि समानम् आसीत्। शिवदत्तः



उभयम् अपि परिशील्य एकं चित्रं पार्श्वे स्थापयित्वा– "एतत् एव मूलचित्रम्" इति उक्तवान्।

श्रीचन्द्रः सन्तोषं प्रकटयन्– "शिवदत्त! भवान् जयं प्राप्तवान्। स्वकीयं चित्रं नयतु भवान्" इति उक्तवान्। राजा चित्रद्वयम् अपि पुनरपि परीक्ष्य– "चित्रद्वयम् अपि समानम् एव अस्ति। सुसूक्ष्मं परिशीलनं कृतं चेदपि कोऽपि भेदः न दृश्यते एव। एवं स्थिते कथं मूलचित्रम् अभिज्ञातवान् भवान्?" इति शिवदत्तं पृष्टवान्।

तदा शिवदत्तः– "महाराज! वस्तुतः श्रीचन्द्रमहोदयः श्रेष्ठः चित्रकारः। तस्य परिशीलनं तावत् सूक्ष्मम् अस्ति यत् सः मम मातुः वामकर्णस्य अधः स्थितं कालकम् अपि अभिज्ञाय स्वचित्रे चित्रितवान्। किन्तु नासाभरणविषये तेन प्रमादः कृतः। मूलचित्रे तत् नीलशिलायुक्तम् अस्ति। श्रीचन्द्रचित्रिते चित्रे नीलशिला रक्तच्छायायुक्ता अस्ति। अतः मया विनायासं मूलचित्रस्य अभिज्ञानं प्राप्तम्। सर्वं दैवानुग्रहफलम्" इति उक्त्वा राजानं शिवदत्तं च कृतज्ञतावचनानि उक्त्वा चित्रं स्वीकृत्य ततः निर्गतवान्।

शिवदत्तस्य निर्गमनस्य अनन्तरं राजा– "मित्र! भवता चित्रिते चित्रे दोषः किमर्थं जातः इति ज्ञातवान् अहम्। दानशीलः भवान् एतस्मिन् सन्दर्भे महत् औदार्यं प्रदर्शितवान्। पूर्वं मया यदा एतत् चित्रं प्रार्थितं तदा भवता न दत्तम्। तेन खिन्नः आसम्। किन्तु इदानीं भवतः औदार्यं दृष्ट्वा नितरां सन्तुष्टः अस्मि। स्वीकरोतु, एतत् मम उपायनम्" इति उक्त्वा रत्नहारं स्वस्य कण्ठतः निष्कास्य श्रीचन्द्रस्य कण्ठे स्थापितवान्।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! 'स्वसङ्ग्रहालयम् आगतं किमपि वस्तु कस्मैचित् अपि दातुं न इच्छति श्रीचन्द्रः' इति तु स्फुटं खलु? अतः एव सः राज्ञः प्रार्थनाम् अपि तिरस्कृतवान्। शिवदत्तः यदा प्रार्थितवान् तदा या अभिज्ञानपरीक्षा आयोजिता सा अपि शिवदत्तस्य निवारणार्थम् एव। एतेन उद्देशेन चित्रं लिखितवान् निपुणः कलाकारः श्रीचन्द्रः नासाभरणविषये किमर्थं

प्रमादं कृतवान्? स च प्रमादः राज्ञा अपि किं ज्ञातः आसीत्? अथवा आत्मनः ख्यापनार्थं सः 'मया अपि दोषः ज्ञातः आसीत्' इति उक्तवान्? पराजयं प्राप्य श्रीचन्द्रः शिवदत्ताय चित्रं प्रत्यर्पितवान्। अत्र किम् औदार्यं दृष्टं राज्ञा, येन सः सन्तोषेण रत्नहारं दत्तवान्? एतेषां मम प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "सङ्ग्रहालयतः किमपि वस्तु दातुं न इच्छति श्रीचन्द्रः इति तु सत्यम् एव। वस्तुप्रीत्या सः राज्ञः अप्रीतिं सम्मुखीकर्तुम् अपि सिद्धः आसीत् यत् तदेव अत्र प्रमाणम्। किन्तु सः शिवदत्तस्य मातृप्रीतिं दैन्यं च दृष्ट्वा दयार्द्रः जातः। यदि चित्रं शिवदत्ताय दीयते तर्हि राजा खिन्नः भवेत्, कुपितः अपि भवेत्। किन्तु यदि चित्रं न दीयेत तर्हि सज्जनः शिवदत्तः खेदितः भवेत्। अमानुषं क्रौर्यं प्रदर्शितं भवेत् अपि। अतः श्रीचन्द्रः समीचीनम् उपायं चिन्तितवान्। चित्राभिज्ञानपरीक्षाम् आयोज्य, तत्र शिवदत्तः अभिज्ञातुं यथा शक्नुयात् तथा कर्तुं नासाभरणे किञ्चित् भिन्नं वर्णं योजितवान्। एवं तेन बुद्ध्या प्रमादः कृतः। यः समर्थः चित्रकारः सन् चित्रस्थव्यक्तेः कर्णस्य अधः स्थितं कालकम् अपि सूक्ष्मदृष्ट्या दृष्ट्वा चित्रितवान् सः नासाभरणविषये प्रमादं कर्तुं सर्वथा न अर्हति। अतः निर्णेतुं शक्यते यत् स च प्रमादः अनवधानवशात् न जातः, अपि तु श्रीचन्द्रेण बुद्ध्या कृतः इति। तीक्ष्णमतिना राज्ञा अपि एषः अंशः लक्षितः एव। अतः एव सः उक्तवान्– मया दोषः ज्ञातः इति। गुणवान् सः श्रीचन्द्रस्य दयार्द्रताम् औदार्यं च ज्ञात्वा सन्तोषं प्रकट्य रत्नहारं दत्तवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# कालकविषये मूढविश्वासः

राज्ञः चित्रसेनस्य विश्वासः आसीत् यत् शरीरे स्थितानि कालकानि शुभाशुभफलं सूचयन्ति इति। राज्ञः एतत् दौर्बल्यं जानन्तः बहवः राज्ञः समीपम् आगत्य 'भवतः मुखस्थं कालकम् ऐश्वर्यं वर्धयति,' 'भवतः बाहुस्थं कालकं सुखकारकम्' इत्येवं वदन्तः धनं प्राप्य गच्छन्ति स्म। एतत्सर्वं दृष्ट्वा मन्त्री सुवर्णदेवः खेदम् अनुभवति। केनापि उपायेन राज्ञि विवेकः उत्पादनीयः इति चिन्तितवान् सः।

कदाचित् शिवनाथनामकः महाराजस्य समीपम् आगतवान्। 'अहं कालकशास्त्रज्ञः' इति स्वपरिचयम् उक्तवान्।

राज्ञः अनुज्ञां प्राप्य स्वस्यूततः सूक्ष्मदर्शकसदृशं साधनविशेषं बहिः आनीय शिवनाथः राज्ञः शरीरे स्थितानि कालकानि सम्यक् परीक्षितुम् उद्युक्तः। एवं परीक्षणसमये राज्ञः दक्षिणहस्तस्य मणिबन्धे एकं कालकं दृष्टं तेन। तत् सुपरीक्ष्य राजानम् उक्तवान् सः– "प्रभो, भवतः मणिबन्धे यत् कालकम् अस्ति तत् यदि तिन्त्रिणीबीजसदृशं स्यात् तर्हि भवान् एतावता चक्रवर्ती अभविष्यत्" इति।

एतत् वचनं तत्रस्थेन मन्त्रिणा सुवर्णदेवेन अपि श्रुतम्। सः झटिति स्मृतवान् यत् द्वारपालकस्य मणिबन्धे तादृशम् एव कालकम् अस्ति इति। अतः सः द्वारपालकम् आहूय उक्तवान्– "भवतः दक्षिणहस्तं प्रसारयतु तावत्" इति।

कालकशास्त्रज्ञेन यादृशं कालकं निर्दिष्टं तादृशं द्वारपालकस्य हस्ते दृश्यते! एतत् दृष्ट्वा राजा ज्ञातवान् यत् एषः शिवनाथः मिथ्यावादी इति।

शिवनाथस्य तु शोचनीया अवस्था। तदीयं मुखं रक्तहीनं कान्तिहीनं च जातम्। किमपि अनुक्त्वा सः ततः निर्गतवान्।

कालकविषये राज्ञः यः मूढविश्वासः आसीत् स च तस्मिन् एव दिने अपगतः।



# चन्दमामानुबन्धः—३९



## अस्मद्देशीयाः पशुपक्षिणः—

# म यू रः

**अ**स्मद्देशीयेषु पक्षिषु सुन्दरतमः अस्ति मयूरः। मयूरस्य सौन्दर्यम् अपूर्वम्। अत्र मूलहेतुः तदीयं बर्हम्। बर्हस्य दैर्घ्यं प्रायः १.२ मीटर् भवेत्। व्यजनम् इव बर्हं प्रसार्य मयूरः यत् नृत्यति नत्तु नितरां मनोहरम्। बर्हस्थाः हरिद्वर्णीयाः चन्द्रकाः द्रष्टॄणां मनांसि अपहरन्ति। मयूरस्य शिरसि स्थिता किरीटसदृशी शिखा सौन्दर्यवर्धिका भवति।

मयूर्याः एतादृशी शोभा न भवति। मयूर्याः समग्रे शरीरे तत्र तत्र वर्णमयानि कालकानि भवन्ति। कण्ठस्य अधः हरिद्वर्णीयाः नीलवर्णीयाः च रेखाः भवन्ति। मयूर्याः शिरसि अपि शिखा भवति। मयूरी सकृत् पञ्चषाणि अण्डानि प्रसूते।

प्रायः मयूराः धान्यकणान्, कोमलान् पल्लवान्, कीटान् च खादन्ति। कदाचित् ते गोधिकाः सर्पान् चापि गृहीत्वा खादन्ति।

पुराणेषु वर्ण्यते यत् सुब्रह्मण्यस्य वाहनं मयूरः इति। स्वसौन्दर्येण द्रष्टॄणां मनः आकर्षन् मयूरः अस्माकं राष्ट्रियपक्षी अस्ति।

# साहाय्यधनसङ्ग्रहार्थं चक्रपादुकाधावनम्

मुम्बयीतः देहलीपर्यन्तं १,६०० किं.मी. यावत् बरोडानगरीया काचित् बालिका चक्रपादुकाधावनं (रोलर् स्केटिङ्ग्) कुर्वती जनानां हृदयम् आकृष्टवती। एतादृशम् अपूर्वं साहसं कृत्वा गिन्नीसुपुस्तके स्वनाम योजिनीयम् इति तस्याः योजना न आसीत्। गुजरातराज्ये स्थितायाः 'कालेज् आफ् आफ्ताल्मालजी'नामिकायाः संस्थायाः निमित्तं साहाय्यधनं सङ्ग्रहीतुं सा एतादृशं चक्रपादुकाधावनं कृतवती। तर्हि एषा किं तस्य महाविद्यालयस्य छात्रा? न। अष्टवर्षीया एषा बरोडानगरे तृतीयकक्ष्यायां पठति। एतस्याः नाम अस्ति शीतला पाण्डेय इति।

गते ग्रीष्मकाले शीतलया पूर्वोक्ता साहसयात्रा कृता। पिता जगदीशपाण्डेयः अन्यौ द्वौ आप्तौ च तस्याः साहाय्यकौ आस्ताम्। यदा तया 'मे'मासे प्रथमदिनाङ्के मुम्बयीतः निर्गतं तदा तस्याः साहाय्यार्थं द्वौ कार्यानेन ताम् अनुसृतवन्तौ। प्रसिद्धः चलचित्रनटः संसत्सदस्यः च श्रीमान् सुनीलदत्तः तस्याः यात्रायाः आरम्भे शुभाशंसनं कृतवान्। महाराष्ट्रम्, गुजरात्, राजस्थानम्, हरियाणा इत्यादीनि राज्यानि अतिक्रम्य तया जून्मासे २२ दिनाङ्के देहलीनगरं प्राप्तम्। प्रयाणसमये तया द्विलक्षं रूप्यकाणि सङ्गृहीतानि। मुम्बयीनगरीयः वसतिगृह-प्रमुखः कश्चित् ५०,००० रूप्यकाणि दत्तवान्। प्रसिद्धा विद्युत्कोषनिर्मात्री संस्था काचित् शीतलायाः साहसयात्रायाः व्यवस्थां कृतवती आसीत्।

शीतला एवं सुदूरं चक्रपादुकाधावनं यत् कृतवती तत् ऐदम्प्राथम्येन इति न। यदा पञ्चवर्षीया आसीत् तदा एव सा चक्रपादुकां धृत्वा देहलीतः मुम्बयीं प्राप्तवती आसीत्। तत्समये प्राप्तं धनं तया अर्बुदरोगिणां साहाय्यार्थं दत्तम् आसीत्। एकवर्षानन्तरं सा अहमदाबादतः मुम्बयीपर्यन्तं (६०० कि.मी.) चक्रपादुकाधावनं कृतवती। सप्तमे वयसि कलकत्तातः कानपुरपर्यन्तं (१००० कि.मी.) चक्रपादुकाधावनं कृतवती। तत्समये यात्रारम्भे थेरेसामाता शुभाशंसनं कृतवती आसीत्।

शीतलायाः एतादृशसाहसप्रवृत्तेः मूलं कारणं तस्याः पिता एव। क्रीडाप्रियः सः कस्याञ्चित् विद्युत्कोषनिर्मातृसंस्थायां कार्यं करोति। यदा पुत्री त्रिवर्षीया आसीत् तदा एव तेन स्वपुत्र्याः सामर्थ्यं क्रीडाप्रियता च ज्ञाता, योग्यं प्रशिक्षणं दत्तं च। वर्षानन्तरं तां 'मारथान स्केटिङ्ग्' निमित्तं नीतवान्। इदानीं शीतला अभ्यासार्थं प्रतिदिनं ६० कि.मी. यावत् चक्रपादुकाधावनं करोति।

अन्ताराष्ट्रिये स्तरे विजयः प्राप्तव्यः इति तीव्रम् इच्छति शीतला। अपरिमिता श्रद्धा निरन्तरप्रयत्नः च अस्ति चेत् लोके असाध्यं किमपि नास्ति खलु? शीतला एतेन गुणद्वयेन युक्ता अस्ति। अतः वयम् आशास्महे यत् तस्याः मनोरथः पूर्णः भवतु इति।



# भवन्तः जानन्ति वा?

१. 'एलिफण्टागुहाः' कुत्र सन्ति?
२. गौरीशङ्करशिखरं सर्वप्रथमं कौ आरूढवन्तौ?
३. हिन्दवः महम्मदीयाश्चापि पञ्चदशशतकीयं कञ्चित् स्वमतीयं महात्मानं मन्यन्ते। सः कः?
४. क्रि.पू. १ शतके कश्चन धर्मप्रचारकः भारतम् आगत्य बहून् क्रिस्तमतानुयायिनः कृत्वा अत्रैव प्राणान् अत्यजत्। सः कः?
५. भारतीया प्रथमवैद्या का?
६. भारतीया उच्चन्यायालयस्य प्रथमन्यायाधीशा का?
७. इण्डियन् एरलैन् विमानं सर्वप्रथमं कः चालितवान्?
८. भारते वैमानिकदलस्य आरम्भः कदा अभवत्?
९. सर्वप्रथमवैमानिकदलस्य नायकः कः आसीत्?
१०. भारतीया अतिप्राचीना नौकानिर्मातृसंस्था का? तस्याः स्थापनं केन कृतम्?
११. अस्माकं देशे 'बालचलनचित्रसंस्था' (चिल्ड्रन् फिलम सोसैटी) कदा केन उद्देशेन आरब्धा?
१२. अतिसमृद्धपशुसम्पत्तियुक्तं राज्यं किम्?
१३. 'व्याघ्रः राष्ट्रियपशुः' इति कदा निर्णीतम्?
१४. भारतीयः सर्वप्रथममूल्याङ्कः (Postal Stamp) कदा प्रकाशितः?
१५. सिक्खजनानाम् अतिपवित्रं यात्रास्थलं किम्?

## उत्तराणि

१. मुम्बयीनगरसमीपे एलिफण्टाद्वीपे।
२. तेनसिंग् नार्गे, एड्मण्ड् हिलेरी च। १९५३ तमे वर्षे।
३. कबीरदासः।
४. येसुक्रिस्तस्य द्वादशसु शिष्येषु अन्यतमः सेण्ट् थामस्। क्रि.पू. ५२ तमे वर्षे सः केरलीयान् बहून् क्रिस्तानुयायिनः कृतवान्। ततः षोडशवर्षाणाम् अनन्तरं मद्रासनगरसमीपस्थे क्रिस्तमन्दिरे तस्य हननं कृतम्।
५. डा. आनन्दबायी जोशी। एषा १८८६ अमेरिकादेशे एं.डि. उपाधिं प्राप्य स्वदेशं महाराष्ट्रम् आगत्य वैद्यवृत्तिम् आरब्धवती। किन्तु १८८७ तमे वर्षे फ़ेब्रवरीमासे २६ तमे दिनाङ्के सा दिवङ्गता।
६. केरलीया जस्टीस् फातिमा बीबी।
७. जे.आर्.डि. टाटा।
८. १९३२ तमे वर्षे अक्टोबर्मासे ८ दिनाङ्के। एतच्च दिनं प्रतिवर्षं वैमानिकदलदिनत्वेन आचर्यते।
९. सुब्रतो मुखर्जी।
१०. विशाखपत्तनस्था हिन्दुस्थान शिपयार्ड्संस्था।
११. १९५५ तमे वर्षे बालचित्रनिर्माणस्य अभिवृद्ध्यर्थं, राष्ट्रियचलनचित्रोत्सवस्य व्यवस्थार्थं च एषा संस्था आरब्धा। गते नवेम्बर्मासे तिरुवनन्तपुरे सप्तमः अन्ताराष्ट्रियः बालचित्रोत्सवः प्रवृत्तः।
१२. उत्तरप्रदेशराज्यम्।
१३. १९७२ तमे वर्षे। ततः पूर्वं सिंहः राष्ट्रियपशुः आसीत्। व्याघ्रसन्ततेः ह्रासं मनसि निधाय एतत् परिवर्तनं कृतम्।
१४. १८९२ तमे वर्षे।
१५. अमृतसरस्थं स्वर्णमन्दिरम्। (गुरुद्वार हरमन्दिर साहिब।)

## शिवभक्तः वानरोत्तमः

देहलीनगरे कस्यचित् शिवमन्दिरस्य समीपे कस्मिंश्चित् वृक्षे कश्चन वानरः निवसति स्म। सः प्रतिदिनं चतुर्वादने वृक्षात् अवतीर्य मन्दिरं प्रविश्य विग्रहस्य पुरतः करौ योजयित्वा भक्त्या तिष्ठति स्म, अल्पे एव काले प्रतिगच्छति स्म अपि। देवदर्शनार्थम् आगताः भक्ताः आश्चर्येण कुतूहलेन च एतं भक्तं वानरं पश्यन्ति स्म। एवं दश वर्षाणि अतीतानि। एषः वानरः गते नवेम्बर्मासे प्राणैः वियुक्तः अभवत्। तदा भक्ताः मृतस्य एतस्य शरीरं गङ्गाजलेन स्नापयित्वा शोभायात्रया यमुनातीरं नीत्वा तदीयम् अन्त्यसंस्कारं निर्वर्तितवन्तः। एतस्मिन् कार्ये विंशतिसहस्रं जनाः सम्मिलिताः आसन्।




# र स वा र्ताः

## काकभक्षिणः जनाः




भवन्तः एतस्मिन् विश्वासं प्राप्नुवन्तु वा मा वा, काकभक्षिणः सन्ति इति तु वस्तुस्थितिः। जपानदेशस्य किसाकटातटवर्तिनि नगरे जनाः कृषिवृत्त्या जीवन्ति। तैः वर्धितानि सस्यानि धान्यानि च काकैः नाश्यन्ते स्म। अतः ते प्रतिवर्षं ७,५०० डालर् परिमितां हानिम् अनुभवन्ति स्म। काकानां पीडातः नितरां क्रुद्धाः ते काकान् मारयित्वा खादितुम् एव उद्युक्ताः अभवन्। कालान्तरे तदेव तत्र रूढं जातम्। गतेषु त्रिषु वर्षेषु अत्र द्विशताधिकाः काकाः मारिताः, ससन्तोषं खादिताः च स्युः।




# पिशाचगृहम्

किरणनामकेन तरुणेन नगरे उद्योगः प्राप्तः आसीत्। किन्तु तत्र वासार्थं गृहं तु न प्राप्तं तेन। भाटकगृहस्य अन्वेषणेन सः नितरां श्रान्तः। एतादृशे सन्दर्भे अमरेशः नाम कश्चित् तेन मिलितः। अमरेशः किरणम् उक्तवान्– "भोः, नगरसीमायां मदीयम् एकं गृहम् अस्ति। जनाः तत् पिशाचावासस्थानं भावयन्तः तत्र वासं कर्तुं भीतिम् अनुभवन्ति। यदि भवान् इच्छति तर्हि तत् गृहम् उपयोक्तुम् अर्हति। भाटकं किमपि दातव्यं नास्ति। चिन्तयतु" इति

किरणः एतत् श्रुत्वा नितरां सन्तुष्टः। सः तस्मिन् गृहे वासम् अङ्गीकृतवान्, रात्रौ तत् गृहं गतवान्। गृहं तु कीलितम् आसीत्। यदा किरणः सोपानानि आरोहन् आसीत् तदा तालः स्वयम् उद्घाटितः। द्वारम् उद्घाटितम् अभवत्। एतत्सर्वं दृष्टवतः किरणस्य मनसि यद्यपि भीतिः उत्पन्ना, तथापि सः आत्मनि धैर्यं पूरयित्वा अग्रे गतवान्।

यदा तेन गृहस्य अन्तः पदं स्थापितं तदा द्वारं पिहितम् अभवत्। तस्य पुरतः अस्पष्टः प्रकाशः आगत्य स्थितः। स च प्रकाशः क्रमशः पिशाचरूपं प्राप्नोत्।

स च पिशाचः अवदत्– "एतस्मिन् गृहे स्थितेषु पिशाचेषु ज्येष्ठः अहम्। मया सह अत्र अन्याः तिस्रः निवसन्ति। यदि भवता अत्र वासः कर्तुम् इष्यते तर्हि प्रथमम् अहं तोषणीयः" इति।

किरणः पिशाचं नमस्कुर्वन् उक्तवान्– "अहम् अत्रैव निवासं करिष्यामि। भवान् यथा आदिशति तथा कर्तुं सिद्धः अस्मि अहम्" इति।

सः पिशाचः सहवासिनीः तिस्रः पिशाचीः आहूय ताः परिचाययन् अवदत्– "एषा मम

"भामहः"



पत्नी। एते द्वे मम पुत्र्यौ। मम पुत्र्योः कतरा सुन्दरी इति भवता वक्तव्यम्। भवतः कथनात् कस्याः अपि कोपः यथा न वर्धेत तथा विशेषतः जागरूकता आश्रयणीया भवता'' इति।

किरणः ते द्वे पिशाचपुत्र्यौ दृष्टवान्। ते द्वे अपि हसन्त्यौ किरणं पश्यतः। किरणः ज्येष्ठपिशाचम् उक्तवान्– ''मया वस्तुस्थितिः उक्ता चेत् कस्याश्चित् अन्यतरायाः कोपः स्यात् एव। अतः कोपदूरीकरणार्थं पञ्चनिमेषात्मकः अवधिः दातव्यः। एवम् अस्तु वा?'' इति। ज्येष्ठपिशाचः अङ्गीकारम् असूचयत्।

किरणः अङ्गुल्या पुत्र्योः अन्यतरां निर्दिशन् उक्तवान्– ''एतयोः एषा एव सुन्दरी। एवं सुन्दरी सती अपि एषा किमर्थं मातापितृभ्यां सह तिष्ठति? यदि एषा अरण्यं गच्छेत् तर्हि कश्चित् सुन्दरः तरुणः पिशाचः एतां परिणयेत् एव। एषा दृष्टा चेत् तरुणपिशाचाः एतां परिणेतुम् अहमहमिकया अग्रे आगच्छेयुः'' इति।

एतत् श्रुत्वा सा तरुणी पिशाची– ''एतेन युक्तम् एव उक्तम्। अहम् अरण्यं गच्छामि। माम् आशिषा अनुगृह्णन्तु'' इति उक्त्वा मातापितरौ नमस्कृत्य ततः निरगच्छत्।

किन्तु किरणस्य वचनं श्रुत्वा अन्या तरुणी पिशाची कुपिता अभवत्। सा कोपेन अन्यं प्रकोष्ठं गत्वा उपविष्टवती। किरणः तस्याः समीपं गत्वा उक्तवान्– ''वस्तुतः सुन्दरी भवती एव। यदि अहम् एतत् वचनं पूर्वं वदेयं तर्हि भवती इतः निरगमिष्यत्। किन्तु अहं भवतीं प्रतिदिनं द्रष्टुम् इच्छामि। अतः असत्यम् उक्त्वा भवत्याः भगिनीं गृहात् दूरं प्रेषितवान्'' इति।

एतत् वचनं श्रुत्वा सा पिशाची सन्तुष्टा। सा किरणम् उक्तवती– ''भवतः व्यवहारेण अहं सन्तुष्टा। किन्तु मम सन्देहः यत् मम भगिनी प्रत्यागता चेत् किं करणीयम् इति'' इति।

''चिन्ता मास्तु भवत्याः। सा न प्रत्यागमिष्यति। तस्याः प्रत्यागमनेन किं सिद्ध्यति? सा असुन्दरी इति, तस्याः रूपं

दृष्ट्वा कोऽपि तरुणपिशाचः आकृष्टः न अभवत् इति खलु? एतादृशीम्अपख्यातिं सा प्राप्तुं न इच्छति। अतः सा न प्रत्यागमिष्यति" इति उक्तवान् किरणः।

"भवान् मम तोषणार्थम् असत्यं वदन् स्यात्। अहं वस्तुतः सुन्दरी न स्याम्" इति कृतककोपेन किरणम् उक्तवती सा तरुणी पिशाची।

"यदि मया असत्यम् उच्येत तर्हि अपि तत् भवत्याः तोषणार्थम् एव खलु? अहं सुन्दरीं तोषयितुम् इच्छामि, न तु यां काञ्चित्" इति गाम्भीर्येण उक्तवान् किरणः।

"एवं वा? यदि भवान् सत्यवादी एव स्यात् तर्हि किं मां परिणेतुं सिद्धः?" इति अपृच्छत् पिशाची।

"अहं मानवः। भवती तु पिशाचकुलजाता। आवयोः विवाहः कथं वा सम्भवेत्?" इति पृष्टवान् किरणः।

"यदा इच्छामि तदा अहं मानवरूपं प्राप्तुं शक्नोमि। मानवस्य परिणये महती इच्छा मम" इति अवदत् पिशाची।

अत्रान्तरे ज्येष्ठः पिशाचः तत्र आगत्य ताम् अपृच्छत्– "वत्से, भवत्याः कोपः अपगतः वा न वा?" इति।

तदा सा पिशाची उक्तवती– "तात! एषः मां परिणेतुं सिद्धः अस्ति" इति।

एतत् श्रुत्वा ज्येष्ठः पिशाचः तत्पत्नी च नितरां सन्तुष्टौ। तौ सन्तोषेण नृत्यं



कृतवन्तौ।

तदा किरणः गाम्भीर्येण उक्तवान्– "एतत् गाननृत्यादिकं स्थगयन्तु तावत्। 'आम्' इति कथनमात्रेण विवाहः सम्पन्नः न भविष्यति। योग्या वरदक्षिणा दत्ता चेदेव विवाहः" इति।

"भोः, वरदक्षिणारूपेण किम् इच्छति भवान्? वदतु तावत्। वस्तुतः तु मम पुत्र्योः विवाहः एव मम जीवनस्य लक्ष्यम् आसीत्। अतः वरदक्षिणारूपेण भवान् यत् इच्छति तत् दातुं सिद्धः एव अहम्" इति।

"अहम् अन्यत् किमपि न इच्छामि। एतत् गृहं मह्यं ददातु। तावता अलम्" इति उक्तवान् किरणः।

"अस्तु, स्वीकरोतु तावत्" इति अवदत्



ज्येष्ठः पिशाचः।

"तर्हि शृणोतु। एतस्मिन् गृहे अहं मम पत्नी च निवसावः। भवान् सपत्नीकः इतः निर्गच्छतु" इति उक्तवान् किरणः।

"एतत् तु अन्याय्यम्। आवाम् अत्र निवसावः चेत् भवतः का हानिः?" इति कोपेन अपृच्छत् पिशाचः।

"यदि भवन्तौ अत्र निवसेतां तर्हि जनाः चिन्तयन्ति यत् अहं गृहजामाता इति, श्वशुरस्य धनेन अहं जीवामि इति च। एतादृशीम् अपख्यातिम् अहं न इच्छामि। मम एकः प्रश्नः अस्ति– भवन्तौ एतत् गृहं विहाय अन्यत्र निवासं कुतो न कुरुतः? इति" इति उक्तवान् किरणः।

"भवता सत्यम् एव उक्तम्। अहं मम पत्नी च यत्र कुत्रापि वा निवासं कर्तुं समर्थौ। पुत्र्याः सन्तोषः एव आवयोः सन्तोषः" इति उक्त्वा पत्न्या सह ततः निर्गतः ज्येष्ठः पिशाचः। गमनसमये ज्येष्ठा पिशाची गृहस्थजीवनविषये पुत्रीं सम्यक् उपदिश्य गतवती।

तयोः निर्गमनस्य अनन्तरं किरणः तरुणीं पिशाचीम् उक्तवान्– "अहं भवत्याः बन्धून् इतः प्रेषितवान्। एतद्विषये मम मनसि खेदः अस्ति" इति।

किरणेन यत् कृतं तत् समर्थयन्ती उक्तवती तरुणी पिशाची– "भवता यत् कृतं तत् युक्तम् एव। मातापितरौ आवयोः विवाहम् इच्छतः स्म। मानवजन्मनि आवयोः विवाहदिनं निश्चितम् आसीत् अपि। अत्रान्तरे अमरेशः नाम धनिकः मम पितुः भूमिं बलात् वशीकृतवान्। अतः आवयोः विवाहः स्थगितः। वयं निर्गतिकाः सञ्जाताः। मम भगिन्याः विश्वासः आसीत् यत् अहं सुन्दरी इत्यतः वरः मां परिणेष्यति एव इति। अतः सा वरं दृष्ट्वा मां परिणयतु इति प्रार्थितवती। किन्तु निराकरणं प्राप्य सा प्रत्यागता। आत्महत्यया इहलोकव्यापारं समापितवती च। एतया घटनया खिन्नाः वयं त्रयः अपि विषं पीत्वा प्राणान् त्यक्तवन्तः। अमरेशविषये अस्माकं कोपः इत्यतः तदीये एतस्मिन् नूतने गृहे वयं वासं कृतवन्तः। मम

अग्रजा धैर्येण स्वयं वरान्वेषणार्थं गतवती। तस्याः विवाहः भविष्यति एव। अहं तु भवता परिणीता। एवं मम जीवनस्य इच्छा पूर्णा जाता" इति।

"यदि इच्छा पूर्णा तर्हि भवत्याः पिशाचजीवनं किमर्थम्? पिशाचत्वं त्यजतु तावत्" इति उक्तवान् किरणः।

अनन्तरं क्षणाभ्यन्तरे सा पिशाची अदृश्यतां गतवती। सा प्रेतजन्मतः मुक्तिं प्राप्तवती आसीत्।

किरणः तस्यां रात्रौ तत्र सुखेन शयनं कृतवान्। प्रातः अमरेशस्य गृहं गत्वा प्रवृत्तं समग्रं निवेदितवान्। सर्वं श्रुत्वा किरणस्य धैर्यं प्रशंसन् उक्तवान् अमरेशः– "भवान्, उत्तमः तरुणः। भवन्तं जामातरं कर्तुम् इच्छामि अहम्। मम एकमात्रपुत्रीं परिणयतु भवान्। वरदक्षिणारूपेण भवते तद् भवनं दास्यामि। पुत्रीं विना मत्पत्नी अहं च स्थातुं न शक्नुवः इत्यतः भवद्भ्यां सह आवाम् अपि निवसावः" इति।

अमरेशस्य पुत्री सुन्दरी आसीत्। अतः तस्याः परिणयम् अङ्गीकृतवान् किरणः। सः अमरेशम् उक्तवान्– "भवतः पुत्रीं परिणेतुम् अहं सिद्धः। किन्तु गृहजामाता भवितुं न सिद्धः। वरदक्षिणायाः विरोधी अहम्। अतः वरदक्षिणारूपेण किमपि न इच्छामि। मम तु उद्योगः अस्ति एव। उद्योगात् यावत् प्राप्यते तावत् मम कुटुम्बभरणार्थम् अलम्" इति।

एतत् श्रुत्वा क्षणकालस्य मौनस्य अनन्तरम् अमरेशः उक्तवान्– "भवतः इच्छा यथा अस्ति तथा भवतु। मदीयं पिशाचाविष्टं गृहं भवता पिशाचपीडारहितं कृतम्। अतः तत् भवनं भवते एव दीयते। भवतः परिश्रमस्य प्रतिफलरूपेण दीयते एतत्। कृपया एतस्य स्वीकरणं मा निराकरोतु" इति।

एषः प्रस्तावः अनुमतः किरणेन। अनन्तरम् अमरेशस्य पुत्रीं परिणीय सुखेन जीवितवान् किरणः।





# वृथा व्ययः

प्राचीने काले सूरपुरे बहुधनः नाम कश्चित् कृपणः निवसति स्म। दैनन्दिनव्ययार्थं धनम् उपयोक्तव्यं चेदपि तस्य खेदः भवति स्म।

कदाचित् सः कार्यनिमित्तं प्रतिवेशिग्रामं प्रति प्रस्थितवान्। मार्गे सः कञ्चन खर्जूरवृक्षं दृष्टवान्। वृक्षे फलगुच्छाः बहवः दृश्यन्ते स्म। फलानां दर्शनतः बहुधनस्य मनसि तीव्रा इच्छा उत्पन्ना यत् खर्जूरफलानि खादनीयानि एव इति। किन्तु वृक्षारोहणं न जानाति सः। तथापि स्खलन् पुनः आरोहन् कथमपि फलसमीपं गतवान् सः।

आतृप्ति खर्जूरफलानि खादितवान् बहुधनः। कानिचन फलानि कोषे अपि स्थापितवान्। अन्ते अवतरणार्थं यदा दृष्टिः अधः प्रसारिता तदा तदीयं हृदयं स्तब्धम् इव! यतः भूमिः पाताले इव दृश्यते! नितराम् अधः स्थितायाः भूमेः दर्शनेन शिरोभ्रमणम् उत्पन्नम् इव। हस्तपादौ कम्पमानौ जातौ। 'अहम् इदानीम् आत्मानं निग्रहीतुं न शक्नोमि' इति भावयन् सः भगवन्तं प्रार्थितवान्– "देव! यदि अहं सकुशलम् अधः गन्तुं शक्नुयां तर्हि सहस्रं जनान् भोजयेयम्" इति।

एतया प्रार्थनया तेन किञ्चिदिव धैर्यं प्राप्तम्। भीतभीतः एव सः क्रमशः अधः गतवान्। किञ्चित् अधः आगत्य सः भूमिं दृष्टवान्। 'भूमिः तावद्दूरे नास्ति। इतः परम् अपायः अपि नास्ति। अतः सहस्रस्य जनानां भोजनं वृथा किमर्थम्? पञ्चशतं जनान् भोजयामि चेत् पर्याप्तं भवेत्' इति आलोचितवान् सः।

पुनः किञ्चित् अधः यदा गतं तदा विचारः आगतः यत् पञ्चशताय जनेभ्यः भोजनदानं व्यर्थं, शताय जनेभ्यः भोजनं दत्तं चेत्

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

पर्याप्तम् इति।

अन्ते भूमिं प्राप्य तृप्त्या सुदीर्घं निःश्वस्य सः चिन्तितवान् यत् शताय जनेभ्यः भोजनदानस्य अपेक्षया एकस्मै सद्ब्राह्मणाय भोजनदानं वरम्। अतः अहम् एकं कुलीनं ब्राह्मणं भोजयिष्यामि इति।

गृहं गच्छतः तस्य मनसि विचारः आगतः– 'यदि स्थूलः ब्राह्मणः आहूयेत तर्हि सः अधिकं खादेत्। तदा तु व्ययः। अतः कृशं कञ्चित् ब्राह्मणम् आहूय भोजनं दास्यामि। राममन्दिरस्य अर्चकः श्यामशास्त्री नितरां कृशः अस्ति। एतम् आहूय भोजयामि चेत् व्ययः न्यूनः' इति। अतः सः ततः साक्षात् श्यामशास्त्रिणः गृहं गतवान्, श्यामशास्त्रिणं भोजनार्थं निमन्त्रितवान् च। श्यामशास्त्री विना वचनं निमन्त्रणम् अङ्गीकृतवान्।

गृहं गतः बहुधनः पत्नीम् उक्तवान्– ''अद्य यदर्थं गतं तत् कार्यं न सम्पन्नम्। अतः तदर्थं श्वः मया पुनरपि गन्तव्यम्। श्वस्तनमध्याह्नस्य भोजनार्थं मया श्यामशास्त्री निमन्त्रितः अस्ति। अतः तस्य निमित्तं पाकं करोतु। व्ययः अधिकः यथा न स्यात् तथा विशेषजागरूकता भवतु'' इति।

अनन्तरदिने प्रातः एव बहुधनः कार्यनिमित्तं पार्श्वग्रामं गतवान्।

मध्याह्नसमये श्यामशास्त्री भोजनार्थं बहुधनस्य गृहम् आगतवान्। बहुधनस्य पत्नी श्यामशास्त्रिणम् आदरेण



स्वागतीकृत्य भोजनं परिवेषितवती। श्यामशास्त्री आकारेण दुर्बलः, किन्तु भोजने तु भीमबलः। अतः त्रयाणां निमित्तं सज्जीकृतः पाकः तेन एकेन एव समापितः। भोजनान्ते ताम्बूलं प्राप्य सः परिशीलितवान् यत् ताम्बूलेन सह दक्षिणा न दत्ता इति।

सः बहुधनपत्नीम् उक्तवान्– ''मातः, दक्षिणा न दत्ता चेत् भोजनदानपुण्यं न प्राप्यते। पुण्यप्राप्त्यर्थं खलु भवत्या भोजनं दत्तम्? अतः रूप्यकद्वयं दक्षिणारूपेण ददातु कृपया'' इति।

पापभीरुः सा रूप्यकद्वयं दत्त्वा श्यामशास्त्रिणं तोषयित्वा सम्प्रेष्य तृप्त्या निश्श्वसितवती।

अनन्तरदिने बहुधनः गृहं प्रत्यागतः। भोजनदानं दक्षिणादानं च पतिं निवेदितवती पत्नी। दक्षिणादानं श्रुतवतः बहुधनस्य मुखं कोपेन आरक्तं जातम्। पत्नीं निन्दन् सः दीर्घं दण्डं हस्तेन स्वीकृत्य– 'सः दुष्टः श्यामशास्त्री मम गृहे लुण्ठनम् एव कृतवान्। तम् अद्य सम्यक् दण्डयिष्यामि' इति वदन् गृहात् निर्गतवान्।

श्यामशास्त्री तु जनाति स्म– एतादृशी काचित् घटना घटेत् एव इति। अतः तदर्थं योग्यः सन्नाहः कृतः आसीत् तेन। गृहम् आगच्छन्तं बहुधनं दूरात् एव दृष्ट्वा सः शय्याम् आश्रितवान्। तस्य पत्नी पुत्रः च शय्यायाः पार्श्वे उपविश्य रोदितुम् उद्युक्तौ जातौ।

श्यामशास्त्रिणः पुत्रः रुदन् एव बहुधनम् उक्तवान्– "भोः, अस्माभिः भवतः कः अपकारः कृतः? भवतः गृहे भोजनं कृत्वा प्रत्यागतः मम पिता उदरवेदनया पीड्यमानः शय्याम् आश्रितवान् अस्ति। न जाने, भवतः गृहे भोजने कीदृशं विषं योजितम् आसीत् इति। एतस्य चिकित्सार्थं दश रूप्यकाणि व्ययितानि। मम पितुः मारणार्थं भवता कोऽपि प्रयत्नः कृतः। आगच्छतु ग्रामप्रमुखसमीपम्। सः एव भवन्तं दण्डयिष्यति" इति।

ग्रामप्रमुखस्य नाम्नः श्रवणात् बहुधनः भीतः। 'चिकित्सायाः व्ययः मया दातव्यः भवेत् एव। तेनैव सह दण्डः अपि दातव्यः भवेत्' इति आलोच्य सः श्यामशास्त्रिपुत्रम् उक्तवान्– "वत्स! भवतः पितुः चिकित्सायाः व्ययम् अहं ददामि। अल्पस्य एतस्य निमित्तं ग्रामप्रमुखस्य समीपं गमनं किमर्थम्?" इति।

अर्धाङ्गीकारं प्रदर्शयन् श्यामशास्त्रिपुत्रः बहुधनतः दश रूप्यकाणि स्वीकृतवान्। बहुधनः ततः मौनं निर्गतः।

एतस्याः घटनातः अनन्तरं बहुधनः खर्जूरवृक्षस्य दर्शनमात्रेण एव कोपं जुगुप्सां च अनुभवति।






आकाशे एव स्थितस्य विभीषणस्य विषये हनूमता यत् उक्तं तत् श्रुत्वा रामः गम्भीरस्वरेण उक्तवान्– "विभीषणः शरणं प्रार्थितवान् अस्ति। अतः अभयदानम् एव धर्मः" इति।

"विभीषणः सज्जनः स्यात् नाम। किन्तु विभीषण-रावणयोः मध्ये यः कलहः अस्ति तन्मध्ये अस्माकं प्रवेशः उचितः न भवेत्। वृथा भारः अस्माभिः न स्वीकरणीयः" इति उक्तवान् सुग्रीवः।

"यथा भवान् वालिना सह कलहं कृत्वा मां शरणं गतः तथैव विभीषणः अपि रावणेन सह कलहं कृत्वा आगतः अस्ति। यथा भवते अभयं दत्तं तथैव विभीषणाय अपि अभयदानं मम धर्मः। विभीषणः सज्जनः इत्यत्र नास्ति विमतिः। अतः अभयदानेन न काऽपि हानिः" इति उक्तवान् रामः।

"अग्रज! अस्माकं मारणार्थं रावणः एव विभीषणं न प्रेषितवान् इत्यत्र कः विश्वासः? अतः सुग्रीवस्य वचनं चिन्तनयोग्यम् अस्ति" इति उक्तवान् लक्ष्मणः।

रामस्य दृढः निश्चयः। "शरणं सम्प्रार्थ्य यः आगतः तस्मै अभयदानस्य निराकरणम् अधर्मः पापकरं च। विभीषणवेषेण यदि रावणः एव आगतः स्यात् तर्हि अपि अहम् अभयं दद्याम् एव। अतः इदानीं विभीषणस्य स्वागतीकरणम् एव योग्यम्" इति उक्तवान् रामः।

'रामः भयशङ्कादीन् अतीत्य तिष्ठति' इति ज्ञातवान् सुग्रीवः। 'जाम्बवादीनां खेदः न

## २०. शुकराक्षसदौत्यम्

स्यात् इत्यतः मया तथा उक्तम्' इति उक्तवान् लक्ष्मणः। रामः मन्दहासं प्रकटितवान्।

सुग्रीवः ततः गत्वा विभीषणम् आनीतवान्। विभीषणः तत्सहचराः च रामं साष्टाङ्गं नमस्कृतवन्तः। "अहं लङ्काधिपतेः रावणस्य तृतीयः अनुजः। रावणः मां तीक्ष्णैः वचनैः निन्दन् अपमानितवान्। अतः भवन्तं शरणं गतः अस्मि। मम कुटुम्बं, गृहं, बान्धवान्, सम्पदं च परित्यज्य आगतवान् अस्मि। अहम् इदानीं निर्गतिकः इव। भवान् एव शरणं मम" इति रामम् उक्तवान् विभीषणः।

एतानि वचनानि श्रुत्वा रामः नितरां सन्तुष्टः। "रावणस्य बलाबलं विवृणोतु तावत्" इति विभीषणम् उक्तवान् सः।

तदा विभीषणः उक्तवान्— "रावणं गन्धर्वः, नागः, राक्षसः, भूतगणः वा जेतुं न अर्हति, यतः तेन तादृशः वरः ब्रह्मणः अनुग्रहात् प्राप्तः। मम अन्यः अग्रजः कुम्भकर्णः पराक्रमेण इन्द्रसमानः। रावणस्य पुत्रः इन्द्रजित् अभेद्यं कवचं धरति, अदृश्यतां प्राप्तुं समर्थः च। सः अदृश्यः सन् एव युद्धे अग्निवर्षणं कर्तुं शक्नोति। रावणस्य सेनानायकाः तु दिक्पालकान् अपि पराजितान् कर्तुं समर्थाः। कामरूपिणः राक्षसाः लङ्कानगरे बहवः सन्ति। एतादृशं विशिष्टं बलम् अस्ति इत्यतः एव रावणः दिक्पालकान् जितवान् अस्ति" इति।

एतत् श्रुत्वा रामः विभीषणम् उक्तवान्—



"रावणस्य बलं यादृशं वा भवतु नाम, तं संहृत्य भवन्तं लङ्काधीशं करिष्यामि। यावत् रावणसंहारः न भविष्यति तावत् अहम् अयोध्यां न प्रतिगमिष्यामि" इति।

रामवचनानि श्रुत्वा विभीषणः रामं साष्टाङ्गं नमस्कृत्य– "यावत् मम शरीरे प्राणाः भवन्ति तावत् दुष्टराक्षसानां रावणस्य च संहारार्थम् अहं भवतः साहाय्यं करिष्यामि। भवतः शत्रवः ममापि शत्रवः भवन्ति" इति उक्तवान्।

तदा रामः विभीषणं प्रीत्या आलिङ्ग्य– "लक्ष्मण! समुद्रजलम् आनीय एतं विभीषणं राक्षसराजत्वेन अभिषिञ्चतु" इति आदिष्टवान्।

वानराणां सम्मुखे विभीषणः राक्षसराजत्वेन अभिषिक्तः अभवत्। वानराः सिंहनादं कृत्वा सन्तोषं प्रकटयन्तः रामं तोषितवन्तः।

अनन्तरं हनूमान् सुग्रीवः च विभीषणं पृष्टवन्तौ– "इदानीम् अस्माभिः वानरसेनया च एतस्य घोरस्य समुद्रस्य लङ्घनं कथं करणीयम्? भवान् कमपि उपायं सूचयितुं शक्नुयात् वा?" इति।

तदा विभीषणः उक्तवान्– "रामः समुद्रराजं शरणं प्रार्थयेत्। रामस्य पूर्वजः सगरः नाम चक्रवर्ती बहुधा समुद्रराजस्य उपकारं कृतवान् आसीत्। अतः प्रत्युपकारबुद्ध्या वा सागरः साहाय्यं कुर्यात् एव। अतः समुद्रसाहाय्यप्राप्तिविषये सन्देहः मास्तु भवताम्" इति।





सुग्रीवः रामलक्ष्मणयोः समीपं गत्वा विभीषणेन यत् उक्तं तत् श्रावितवान्। विभीषणः योग्यम् उपायं सूचितवान् इति चिन्तितवान् रामः। 'एतद्विषये भवताम् अभिप्रायः कः?' इति सुग्रीवलक्ष्मणादीन् पृष्टवान् सः। तदा ते उक्तवन्तः— ''अस्मदागमनं ज्ञात्वा अपि समुद्रराजः मार्गं न परिकल्पितवान्। तथापि अस्माभिः सः प्रार्थनीयः। यावत् शिशुः स्तन्यप्रार्थनं न करोति तावत् माता अपि क्षीरं न ददाति खलु?'' इति।

एवं विभीषणस्य सूचना सर्वैः अनुमता। 'वनवासी अहं समुद्रतीरे दर्भान् प्रसार्य व्रती सन् शयनं करोमि' इति उक्त्वा रामः दर्भसङ्ग्रहणार्थं ततः गतवान्।

अत्रान्तरे रावणस्य गूढचरेषु अन्यतमः शार्दूलः नाम राक्षसः लङ्कातः आगत्य वानरसेनां परिशील्य प्रतिगत्य रावणम् उक्तवान्— ''प्रभो, समुद्रस्य अपरस्मिन् तीरे अन्यसागरः इव दृश्यमाना वानर-भल्लूकसेना अस्ति। रामलक्ष्मणादयः धनुर्धारिणः सन्तः सीतां नेतुम् अत्र आगन्तुं सन्नद्धाः सन्ति। अहम् उपरिष्टात् त्वरया किञ्चित् दृष्ट्वा आगतवान्। सेनायाः समग्रं विवरणं ज्ञातुं कश्चित् अन्यः प्रेषणीयः'' इति।

रावणः शुकनामकं राक्षसम् आहूय— ''मत्सन्देशवचनैः भवान् सुग्रीवम् एवं वदतु— 'अये, सुग्रीव! मया रामपत्नी आनीता यत् तस्य भवतः च कः सम्बन्धः? न कोऽपि सम्बन्धः खलु? पत्नीवियुक्तः रामः किमपि वा करोतु नाम। भवान् किमर्थं वा तस्य साहाय्यार्थं गच्छन् विपदं स्वागतीकरोति? देवगन्धर्वादिभिः अपि दुष्प्रवेश्या लङ्का वानरैः प्रवेष्टुं शक्या इति चिन्तनं तु भ्रमः एव। प्रतिगमनं भवतः क्षेमाय' इति'' इति।

एतं सन्देशं स्वीकृत्य राक्षसः शुकः पक्षिरूपं प्राप्य वानरसेनासमीपं गतवान्। आकाशे एव स्थित्वा ''सुग्रीव!'' इति उच्चैः आहूतवान्। एतत् श्रुत्वा सुग्रीवः अग्रे आगत्य— ''अहमस्मि सुग्रीवः। कः भवान्? किमर्थं माम् आहूतवान्?'' इति पृष्टवान्। शुकः आकाशे एव स्थित्वा रावणसन्देशं



यथावत् श्रावितवान्।

"अनुचितं सन्देशम् आनीतवन्तम् एतं मारयिष्यामः वयम्" इति वदन्तः वानराः आकाशं गत्वा शुकं गृहीत्वा भूमौ पातितवन्तः।

तदा शुकः दैन्येन– "राम, दूतं मां रक्षतु कृपया। राजनीतिः भवता अविदिता तु न। वानरकोपाग्नितः मां रक्षतु" इति प्रार्थितवान्।

रामः शुकं बन्धविमुक्तं कृतवान्। शुकः आकाशं गत्वा– "सुग्रीव! मया रावणम् उद्दिश्य कः सन्देशः वक्तव्यः?" इति पृष्टवान्।

"अये, रावणदूत, रावणं मद्वचनैः एवं वदतु– 'अये रावण! भवान् मम मित्रं न, उपकृतवान् अपि न। प्रत्युत मम मित्रस्य शत्रुः अस्ति भवान्। एवम् एव मम वैरिणः वालिनः मित्रम् आसीत् भवान्। एवम् उभयथा अपि भवान् मम शत्रुः एव। यथा वाली तथा भवान् अपि मरणं प्राप्नोति। भवतः, भवत्पुत्राणां, भवत्परिवारस्य च संहारकः अहम्। अचिरात् एव महासेनया सह आगत्य भवन्तं संहरिष्यामि। रामबाणात् भवन्तं देवेन्द्रादयः अपि रक्षितुं न अर्हन्ति। रामलक्ष्मणयोः अनुपस्थितिं ज्ञात्वा भवान् सीताम् अपहृतवान्। सर्वथा भीरुः भवान्। भवतः मरणकालम् आसन्नं भावयतु' इति" इति उक्तवान् सुग्रीवः।

एतं सन्देशं श्रुत्वा यावत् शुकः ततः निर्गन्तुम् उद्युक्तः तावता अङ्गदः सुग्रीवम् उक्तवान्– "एषः न दूतः, अपि तु गूढचरः। एषः तीक्ष्णदृष्ट्या परितः पश्यन् सेनाबलं परिशीलयन् आसीत्" इति।

एतत् श्रुत्वा सुग्रीवः वानरान् आज्ञापितवान् यत् 'तं गृह्णन्तु' इति। वानराः तं गृहीत्वा पीडयितुम् उद्युक्ताः। तदा शुकः– "हा हन्त! एते वानराः मम पक्षच्छेदनं कुर्वन्तः सन्ति। मम नेत्रे उत्पाटयन्तः सन्ति। राम! रक्षतु माम्" इति आक्रन्दनं कृतवान्। तदा रामः अग्रे आगत्य तं वानरपीडातः मोचितवान्। शुकः सकुशलं लङ्कां प्रतिगतवान्।

अनन्तरं रामः दर्भमय्यां शय्यायां हस्तम्

उपधानीकृत्य शयनं कृतवान्। तस्य मुखं समुद्राभिमुखम् आसीत्। दिनत्रयं यावत् सः समुद्रराजं प्रार्थितवान्। तथापि समुद्रराजः प्रत्यक्षः न जातः। ततः काऽपि प्रतिक्रिया अपि न आसीत्।

एतेन रामस्य कोपः प्रवृद्धः। सः कोपेन उग्ररूपं प्राप्य लक्ष्मणम् उक्तवान्– "इतोऽपि एषः समुद्रः मौनं तिष्ठति। एतस्य महान् गर्वः दृश्यते। आनयतु मम धनुर्बाणादिकम्। एकेन एव प्रहारेण समग्रं सागरम् आकुलीकरिष्यामि" इति।

लक्ष्मणः धनुर्बाणादीन् आनीय दत्तवान्। रामः धनुषि बाणं संयोज्य चतुरः बाणान् प्रयुक्तवान्। ते बाणाः समुद्रं प्रविश्य अग्निम् उत्पादितवन्तः। ततः उत्पन्नाः तरङ्गाः आकाशे आवृताः अभवन्।

रामः पुनरपि यदा बाणं प्रयोक्तुम् उद्युक्तः तदा लक्ष्मणः– "अग्रज! अलं साहसेन। इतोऽपि बाणप्रयोगः यदि क्रियेत तर्हि त्रिलोकी अपि ज्वलिता स्यात्" इति उक्तवान्।

तावता अपि समुद्रराजः मौनी एव। अतः रामः समुद्रं पश्यन्– "अये उद्धतसमुद्र! मम पराक्रमं भवान् इतः पूर्वं न दृष्टवान्। अद्य पश्यतु। बाणैः भवतः जलं शोषयित्वा भवन्तं मरुभूमिं करिष्यामि। दानवानां स्नेहस्य कारणतः भवतः एतादृशम् औद्धत्यम् अज्ञानं च" इति उक्त्वा धनुषि ब्रह्मास्त्रं संयोज्य



आकर्णम् आकृष्टवान्। तावता भूमिः कम्पिता। पर्वताः कम्पमानाः जाताः। तीव्रः वायुः आकाशे उत्पन्नः। मेघगर्जनं श्रुतम्। अशनिः पतितः। समुद्रजलं शतयोजनं यावत् पृष्ठतः गतम्। समुद्रजीविनः निराश्रयाः जाताः। अनतिदूरे कुत्रचित् 'राम राम' इति प्रार्थनाध्वनिः श्रुतः। अतः रामः बाणप्रयोगं स्थगितवान्।

तावता समुद्रमध्ये समुद्रराजः प्रत्यक्षः जातः। वज्रकान्तियुतस्य तस्य मुखात् 'राम, राम' इति वचनं निरन्तरं श्रूयते स्म। दिव्याभरणैः पुष्पमालिकाभिः च अलङ्कृतस्य तस्य पृष्ठतः गङ्गायमुनादयः नदीदेव्यः स्थिताः आसन्।

समुद्रराजः रामस्य पुरतः स्थित्वा करौ

योजयित्वा– "राम! भवतः परिस्थितिम् अहं जानामि। गाम्भीर्यं गभीरता च मम सहजः गुणः। यदि अहं स्वभावं परित्यजेयं तर्हि लोके उत्पाताः सम्भवेयुः। अतः इच्छन् अपि अहं किमपि कर्तुं न शक्नोमि। किन्तु ब्रह्मशासनम् अपि अनुल्लङ्घ्यम् एव। अतः अहम् एतावत् तु कर्तुं शक्नोमि यत् यावत् भवतः सेना अपरतीरं न प्राप्नुयात् तावत् भवत्सु कोऽपि मयि मज्जितः यथा न भवेत् तथा सर्वान् उद्धर्तुं शक्नोमि। इतोऽपि अधिकं किमपि कर्तुं सामर्थ्यं नास्ति मम" इति उक्तवान्।

"तर्हि इदानीं धनुषि योजितः बाणः कुत्र लक्ष्यीकरणीयः मया?" इति पृष्टवान् रामः।

"उत्तरस्यां दिशि कश्चन प्रदेशः अस्ति। तत्र अभीरुनामकाः पापात्मानः बहवः निवसन्ति। पापाचरणम् एव तेषां प्रवृत्तिः। ते यथा संहृता भवेयुः तथा बाणप्रयोगं करोतु कृपया" इति निवेदितवान् समुद्रराजः।

समुद्रराजेन यथा सूचितं तथा कृतवान् रामः। यत्र बाणः पतितः तत्र सर्वम् अपि उध्वस्तम् अभवत्। महान् गर्तः तत्र जातः। स च प्रदेशः समुद्रजलेन आक्रान्तः अभवत्। तच्च स्थलम् एव 'व्रणकूपः' इति ख्यातम्।

अनन्तरं समुद्रराजः रामम् उद्दिश्य– "राम! भवतः सेनायां नलः नाम विश्वकर्मपुत्रः अस्ति। सः समुद्रस्य उपरि सेतुं निर्मातुं समर्थः। तेन निर्मीयमाणा सेतुः समुद्रे निमग्ना यथा न भवेत् तथा अहं सेतुम् उद्धरामि। भवान् च जयशाली भविष्यति" इति उक्त्वा रामस्य अनुज्ञां प्राप्य अदृश्यतां गतवान्।

रामेण पृष्टः नलः एवम् उक्तवान्– "आम्। अहं विश्वकर्मणः पुत्रः। विश्वकर्मणः विशेषवरः अपि प्राप्तः अस्ति मया। समुद्रस्य उपरि सेतुं निर्मातुं निश्चयेन शक्नोमि अहम्। वानराः अत्र साहाय्यं कुर्वन्तु। सेतुनिर्माणार्थम् आज्ञापयतु माम्। समुद्रक्रमणसमस्यां परिहरिष्यामि अहम्" इति।





# त्रयः प्रश्नाः

चन्दनदेशे पर्वतप्रदेशे शाल्मली नाम नदी प्रवहति स्म। तस्याः तीरे गौरीपुरं नाम ग्रामः आसीत्। तस्मिन् ग्रामे रामशर्मा नाम पण्डितः निवसति स्म। रामशर्मा आशुकविः। तस्य आशुकवित्वं सर्वत्र प्रसिद्धम् आसीत्।

रामशर्मणः भगिन्याः पति श्रीपतिशास्त्री। सः राज्ञः आस्थानपण्डितः। अहं पण्डितः इति, अहम् उच्चोद्योगे अस्मि इति च तस्य अहङ्कारः आसीत्।

कदाचित् रामशर्मणः पुत्र्याः जन्मदिनस्य निमित्तं श्रीपतिशास्त्री पत्न्या सह गौरीपुरम् आगतवान्। वार्तालापमध्ये सः रामशर्माणम् उक्तवान्– ''राजधानीं कदाचित् आगच्छतु भोः। मयि राजास्थाने स्थिते, तत्र भवतः प्रवेशः नितरां सुलभः। भवान् श्रीपतिशास्त्रिणः श्यालः इति ज्ञातं चेत् राजा भवन्तम् अपि आस्थानपण्डितं कुर्यात्'' इति।

रामशर्मा पदव्यादिकं न इच्छति। कृषिकार्येण एव तृप्तिः तस्य। ''भोः, आस्थानपण्डितपदवीम् अन्यां पदवीं वा न इच्छामि अहम्। कृषिकर्म, ग्रामजीवनं च इष्टतमं मम। अत्रैव तृप्तिः, अत्रैव स्फूर्तिः। निस्सारं नगरजीवनम्'' इति उक्तवान् रामशर्मा।

एतत् श्रुत्वा श्रीपतिशास्त्री खिन्नः। 'नगरजीवनं निन्दन् एषः नगरे जीवतः ममापि निन्दनं कृतवान्' इति चिन्तयन् सः खेदेन मौनम् आश्रितवान्। ततः स्वगृहं गतः सः पत्न्याः सुभद्रायाः मातृगृहगमनस्य अपि निषेधं कृतवान्। स्वयं तु न गतवान् एव। एवम् एव सप्तदश वर्षाणि अतीतानि। रामशर्मणः पुत्री शारदा इदानीं सप्तदशवर्षीया सुन्दरी तरुणी।

गौरीपुरसमीपे कल्याणदुर्गं नाम ग्रामः



अस्ति। तत्र श्रीपतिशास्त्रिणः बान्धवाः आसन्। तेषां गृहे प्रचलिष्यमाणस्य विवाहस्य निमित्तं रामशर्मा सकुटुम्बं गतवान्। विवाहदिने उपस्थितां भगिनीं सुभद्रां दृष्ट्वा रामशर्मा नितरां सन्तुष्टः। कुशलप्रश्नान् पृष्ट्वा– "भवत्याः पतिः अपि आगतः अस्ति खलु?" इति पृष्टवान्।

चिरकालानन्तरम् अग्रजस्य दर्शनतः आनन्दाश्रूणि स्रावयन्ती सुभद्रा, दुःखम् अन्तः निगृह्य– "अग्रज, आर्यपुत्रः न आगतः। पुत्रेण सह आगता अस्मि" इति उक्त्वा दूरस्थं पुत्रं माधवम् आहूय रामशर्माणं परिचायितवती।

माधवः विनयेन मातुलं नमस्कृतवान्। माधवस्य विनयं, सौजन्यं च दृष्ट्वा रामशर्मा नितरां सन्तुष्टः। शारदायाः सौन्दर्यं विनयादिकं च दृष्ट्वा सुभद्रा अपि सन्तुष्टा।

किञ्चित्कालानन्तरं सुभद्रा अग्रजम् आहूय उक्तवती– "अग्रज! भवतः पुत्रीं दृष्टवत्याः मम मनसि कोऽपि मधुरः भावः। यदि एषा मम स्नुषा भवेत् तर्हि बहु समीचीनं भवेत्। तेन आवयोः कुटुम्बयोः मध्ये आत्मीयता पुनः स्थापिता भवेत्" इति।

सुभद्रायाः वचनं श्रुत्वा रामशर्मा सन्तुष्टः सन्– "भगिनि, मम मनसि अपि एषः एव विचारः आसीत्। भवती एव स्वयं प्रस्तावं कृतवती इति तु महत् सौभाग्यम्। किन्तु मम सन्देहः यत् आवुत्तः एतत् अङ्गीकुर्यात् वा न वा इति" इति उक्तवान्।

"आर्यपुत्रः अङ्गीकुर्यात् इति भाति। यतः पूर्वतनविरसः विस्मृतप्रायः तेन" इति उक्तवती सुभद्रा।

"तस्य अत्र अनागमनं दृष्ट्वा मया चिन्तितं यत् मम ग्रामस्य सामीप्यं स्मरन्, सपरिवारस्य मम उपस्थितिं सम्भावयन् सः अत्र न आगतः इति" इति उक्तवान् रामशर्मा।

"राजसभायाम् अवश्यम् उपस्थातव्यम् आपतितम् इत्यतः तेन अत्र न आगतम्। तदस्तु, भवान् कदाचित् मम गृहम् आगत्य विवाहप्रस्तावं करोतु। फलं तु दैवाधीनम्" इति उक्तवती सुभद्रा।

कानिचन दिनानि अतीतानि। कस्मिंश्चित् उत्तमे दिने रामशर्मा भगिन्याः गृहं गतवान्। गृहं गता सुभद्रा ग्रामे विवाहदिने अग्रजः मिलितः इति, सः माधवं जामातरं कर्तुम् इच्छति इति, तद्विषये वार्तालापं कर्तुम् अचिरात् एव आगमिष्यति इति च पतिम् उक्तवती आसीत्।

गृहम् आगतं श्यालं गाम्भीर्येण एव स्वागतीकृतवान् श्रीपतिशास्त्री। सुभद्रा तु महता सन्तोषेण अग्रजं सत्कृतवती।

रामशर्मा आगमनकारणम् आवुत्तं निवेद्य– ''एतद्विषये भवतः अभिप्रायः कः?'' इति पृष्टवान्।

तदा श्रीपतिशास्त्री उक्तवान्– ''भवतः पुत्र्याः सौन्दर्यं तिष्ठतु नाम, तस्याः विद्याभ्यासविषये वदतु तावत्'' इति। तदीये वचने अनादरः स्फुटं दृश्यते स्म।

रामशर्मा तु सहनया एव उक्तवान्– ''मम पुत्र्याः प्रशंसा मया न करणीया खलु? एतावत् तु वदामि– नाम्ना शारदा सा अन्वर्थनामधेया। श्रुत्वा भवान् प्रमाणम्'' इति।

तदा श्रीपतिशास्त्री– ''काकी अपि भावयति– मम पुत्री अपि सुन्दरी इति। अतः भवतः वचने विश्वासः नास्ति मम। पाण्डित्यम् अपरीक्ष्य स्नुषां गृहम् आनेतुं न इच्छामि अहम्'' इति गाम्भीर्येण उक्तवान्।

'पूर्वतनः विरसः इतोऽपि एतेन न विस्मृतः' इति ज्ञातवान् रामशर्मा। विवाहप्रस्तावः इत्यतः असमाधानं निगृह्य–





श्रीपतिशास्त्री सपरिवारं शकटम् आरुह्य गौरीपुरसमीपस्थायाः शाल्मलीनद्याः तीरं प्राप्तवान्। सर्वे शकटात् अवतीर्य नौकया नदीं तीर्णवन्तः। पुनः शकटे वस्तूनि आरोप्य अग्रे प्रस्थितवन्तः। श्रीपतिशास्त्री शकटस्य पृष्ठभागे उपविष्टवान् आसीत्। एतावता एव मल्लिकार्जुनस्य श्रीपतिशास्त्रिणः च मैत्री जाता आसीत्। श्रीपतिशास्त्रिणा सह वार्तालापं कुर्वन् मल्लिकार्जुनः शकटे उपविष्टवान्।

अत्रान्तरे एका पिपीलिका श्रीपतिशास्त्रिणं हस्ते अदशत्। "हा हा" इति वदन् श्रीपतिशास्त्री रोषेण तां पिपीलिकां मारितवान्।

"मम गृहम् आगत्य वधूपरीक्षां कुर्वन्तु भवन्तः" इति प्रार्थितवान् सः। श्रीपतिशास्त्री पञ्चाङ्गं दृष्ट्वा शुभदिनं निश्चित्य सूचितवान्। "तस्मिन् दिने भवताम् आनयनार्थं शकटं प्रेषयिष्यामि" इति उक्तवान् रामशर्मा। विनयदर्शनार्थं वा 'मास्तु' इति वक्तव्यं खलु श्रीपतिशास्त्रिणा? तदपि न कृतं तेन।

निश्चिते दिने शकटं प्रेषितवान् रामशर्मा। रामशर्मणः बन्धुः कश्चन वरपक्षीयान् आनेतुं शकटेन सह गतवान्। तेन सह मल्लिकार्जुनः नाम दशवर्षीयः कर्मकरपुत्रः अपि गतवान्। मल्लिकार्जुनः बालः चेदपि तीक्ष्णमतिः।

अनन्तरं समययापनार्थं मल्लिकार्जुनं पृष्टवान् सः– "अये वत्स! चतुरः भवान्। रामशास्त्रिणः गृहसदस्यान् सर्वान् जानाति खलु भवान्? तस्य पुत्री विद्याभ्यासे किं चतुरा?" इति।

तदा मल्लिकार्जुनः हसन्– "श्रीमन्! अहम् अस्मि तस्याः शिष्यः। यदि अहं चतुरः स्यां तर्हि मम गुरुः अपि चतुरा एव स्यात् खलु? किम् अधिककथनेन? तया बहु अधीतम् इति एतावत् तु वदामि" इति उक्तवान्।

"एवं वा? भवान् शारदायाः शिष्यः वा? कियत् अधीतं भवता?" इति पृष्टवान् श्रीपतिशास्त्री।

"मया कियत् अधीतम् इति कथनेन किम्? मम बुद्धिमत्ता कियत् इति ज्ञातव्यं चेत् वदतु। अहं त्रीन् प्रश्नान् पृच्छामि। तद्बलात् भवान् मम बुद्धिमत्तां ज्ञातुम् अर्हति" इति उक्तवान् मल्लिकार्जुनः।

"अहो, भवान् प्रश्नद्वारा मम पाण्डित्यम् एव परीक्षितुम् उद्युक्तः! अस्तु तावत्, प्रश्नान् पृच्छतु भवान्। किन्तु तत्र कश्चन नियमः अङ्गीकरणीयः" इति उक्तवान् श्रीपतिशास्त्री।

"नियमं वदतु तावत्" इति उक्तवान् मल्लिकार्जुनः।

"यदि जयः भवतः तर्हि भवतः गुरुः अपि जितवती इव। यदि भवतः पराजयः तर्हि भवतः गुरुः अपि पराजिता इव। एषः नियमः अनुमतः वा?" इति पृष्टवान् श्रीपतिशास्त्री।

एतं वार्तालापं श्रुत्वा शकटस्थाः सुभद्रा-माधवादयः किञ्चिदिव भीताः। सुभद्रा तु मल्लिकार्जुनं मृदु तर्जयित्वा वार्तालापतः निवारयितुं प्रयत्नं कृतवती। किन्तु श्रीपतिशास्त्री एतत् अविगणयन्– "प्रश्नान् पृच्छतु तावत्" इति मल्लिकार्जुनम् उक्तवान्।

"प्रथमः प्रश्नः– पिपीलिकानां दृष्ट्या राक्षसः कः?" इति पृष्टवान् मल्लिकार्जुनः।

"एषः कीदृशः प्रश्नः? कथासम्बन्धी प्रश्नः स्यात् एषः। एतादृशः प्रश्नः न प्रष्टव्यः" इति उक्तवान् श्रीपतिशास्त्री।

"कथासम्बन्धी प्रश्नः न एषः। किञ्चित् चिन्तितं चेत् उत्तरं लभ्यते एव। भवता उत्तरं





वक्तुं यदि न शक्येत तर्हि उत्तरम् अहं वदामि" इति उक्तवान् मल्लिकार्जुनः।

उत्तरं वक्तुम् अशक्नुवन् श्रीपतिशास्त्री उक्तवान्– "उत्तरं भवान् एव वदतु तावत्" इति।

"पिपीलिकानां दृष्ट्या राक्षसः न अन्यः, अपि तु मानवः एव। कनिष्ठिकया मर्दिता अपि पिपीलिका मृता भवति। अतः पिपीलिकानां दृष्ट्या राक्षसः मानवः एव" इति उत्तरं दत्तवान् मल्लिकार्जुनः।

"अस्तु, द्वितीयं प्रश्नं पृच्छतु तावत्" इति उक्तवान् श्रीपतिशास्त्री।

"मनुष्येण अवश्यप्राप्तव्यं किम्?" इति पृष्टवान् मल्लिकार्जुनः।

"ज्ञानं पाण्डित्यं च" इति उक्तवान् श्रीपतिशास्त्री।

तदा मल्लिकार्जुनः हसन्– "एतत् सर्वथा न। अवश्यप्राप्तव्यं तु तीक्ष्णमतित्वं समयस्फूर्तिः वा। अहं तु एतेन एव गुणेन पूर्वतनप्रश्ने इदानीं च जयं प्राप्तवान्। एवं ननु?" इति पृष्टवान्।

'आम्' इति अङ्गीकारं प्रदर्शितवान् श्रीपतिशास्त्री। बालकस्य बुद्धितीक्ष्णतां दृष्ट्वा नितरां सन्तुष्टः अस्ति सः। तदीयः अहङ्कारः क्रमशः क्षीयमाणः अस्ति इदानीम्।

"मम तृतीयं प्रश्नं शृणोतु तावत्। स्नुषा श्वशुरयोः विषये कीदृशेन भावेन युक्ता स्यात्?" इति पृष्टवान् मल्लिकार्जुनः।

"भयेन भक्त्या गौरवेण च युक्ता स्यात्" इति उक्तवान् श्रीपतिशास्त्री।

"न तथा। अस्मदीयभावनया युक्ता स्यात् सा। यदि श्वश्रू-श्वशुरादयः उत्तमाः स्युः तर्हि भक्तिगौरवादयः तस्यां स्वयम् उत्पद्यन्ते। यदि ते उत्तमाः न स्युः तर्हि अपि स्नुषा अस्मदीयभावनया युक्ता चेत् स्वगुणातिशयेन तान् वशीकृत्य गृहे सौहार्दभावं जनयितुं शक्नोति। अतः 'एते मदीयाः' इति भावना एव प्राधान्यम् आवहति" इति उक्तवान् मल्लिकार्जुनः।

कामपि प्रतिक्रियां प्रदर्शयितुम् अशक्नुवन् श्रीपतिशास्त्री मौनम् आश्रितवान्। एतत्

दृष्टवतां सुभद्रादीनाम् आतङ्कः किञ्चिदिव अपगतः। तेषां मुखे मन्दहासः उत्पन्नः।

द्वित्राणां क्षणानाम् अनन्तरं श्रीपतिशास्त्री पृष्टवान्— "एतान् प्रश्नान् पृच्छतु इति उक्त्वा भवतः गुरुः भवन्तं प्रेषितवती वा?" इति।

तदा मल्लिकार्जुनः उक्तवान्— "तथा नास्ति श्रीमन्! 'विचिन्त्य सम्भाषणं करोतु' इति मां बोधयति सा। चिन्तनं कृतं चेत् सर्वं ज्ञायते इति तस्याः आशयः। भवतः आगमनवार्तां श्रुत्वा अहं नितरां सन्तुष्टः आसम्। तदा मम गुरुः शारदाभगिनी उक्तवती यत् अलं सन्तोषेण, एषः सम्बन्धः न घटते इति। अतः अहम् एव धैर्यं प्राप्य प्रश्नद्वारा मदीयान् विचारान् भवन्तं निवेदितवान्। अत्र शारदाभगिन्याः हस्तक्षेपः कोऽपि नास्ति" इति।

यदा शकटं गृहसमीपं गतं तदा रामशर्मा अग्रे आगत्य सर्वान् स्वागतीकृतवान्। पितुः सूचनायाः अनुसारं शारदा बहिः आगत्य सर्वान् विनयेन नमस्कृत्य अन्तः गतवती।

भोजनादीनाम् अनन्तरं विश्रान्तिसमये रामशर्मा श्रीपतिशास्त्रिणं पृष्टवान्— "मम पुत्रीम् अत्र आगन्तुं सूचयामि वा?" इति।

"किमर्थम् एतत्? सा तु मया दृष्टा एव" इति उक्तवान् श्रीपतिशास्त्री।

"तस्याः विद्वत्तायाः परीक्षा करणीया इति खलु भवतः आशयः आसीत्?" इति पृष्टवान् रामशर्मा।

"आम्, आसीत्। किन्तु भवतः पुत्र्याः शिष्यः मल्लिकार्जुनः त्रिभिः प्रश्नैः मां पराजित्य विवेकं बोधितवान्। 'चिन्तनं कृत्वा व्यवहरणीयम्' इति बोधितं तेन। इदानीं चिन्तनं कृत्वा निश्चितवान् अस्मि यत् शारदा मम स्नुषा भवितुम् अर्हा इति। इतः परम् अग्रिमः क्रमः— मुहूर्तनिश्चयः एव" इति उक्तवान् श्रीपतिशास्त्री।

एतानि वचनानि श्रुतवतां रामशर्मादीनां मुखं मन्दहासेन आश्चर्येण च विकसितम् अभवत्।





# श्वेतः गजः

बर्मादेशं पूर्वं होलाङ्ग् नाम राजा पालयन् आसीत्। तस्य राजधान्यां क्याङ्ग्नामकः कश्चन रजकः वसति स्म। तेन क्षालितानि वस्त्राणि स्वच्छतया शोभन्ते स्म।

राजधान्यां कश्चन कुम्भकारः अपि निवसति स्म। मृन्मयपात्रनिर्माणे सः सुनिपुणः आसीत्। कदाचित् सः क्याङ्ग्समीपम् आगत्य उक्तवान्– "राजा माम् आहूतवान् अस्ति। अस्वस्थायाः राज्ञ्याः चिकित्सार्थम् औषधानि सज्जीकरणीयानि सन्ति। तदर्थम् अपेक्षितानि पात्राणि निर्मातुं मां सूचितवान् अस्ति राजा" इति।

"भाग्यशाली भवान्। यतः सर्वे राज्ञः दर्शनं प्राप्तुं न अर्हन्ति" इति उक्तवान् क्याङ्ग्।

"भवता युक्तम् एव उक्तम्। किन्तु यदा राजदर्शनं क्रियते तदा मलिनानि वस्त्राणि धृतानि चेत् वरं न स्यात् खलु? अतः मम वस्त्राणि स्वच्छतया प्रक्षाल्य श्वः प्रातः प्रतिददातु" इति उक्तवान् कुम्भकारः।

तानि स्वीकृत्य क्याङ्गः स्वच्छीकरणार्थं क्वथति जले यदा स्थापितवान् तदा नीलवर्णीयानि तानि वर्णरहितानि जातानि।

अनन्तरदिने तत्र आगतः कुम्भकारः श्वेतवर्णतां गतानि स्ववस्त्राणि दृष्ट्वा नितरां कुपितः। "भवता यत् अकार्यं कृतं तत् राजानं निवेद्य दण्डयिष्यामि" इति कोपेन उक्त्वा धनं किमपि अदत्त्वा ततः निर्गतवान् सः।

कुम्भकारः यदा राजानं दृष्टवान् तदा राजा आश्चर्येण पृष्टवान्– "अहो, भवतः वस्त्राणां स्वच्छता! वस्त्राणि एवं प्रकाशमानानि यथा स्युः तथा कः क्षालितवान्?" इति।

प्रतीकारसाधनार्थम् एषः एव सुसमयः इति

"बर्मादेशीया जानपदकथा"

आलोच्य कुम्भकारः राजानम् उक्तवान्– 'प्रभो, अस्माकं नगरे क्याङ्गः नाम रजकः अस्ति। सः कृष्णवर्णीयं शुनकम् अपि श्वेतीकर्तुं समर्थः। प्रभो, भवान् बहोः कालतः श्वेतगजः प्राप्तव्यः इति चिन्तयन् अस्ति खलु? तदर्थम् एषः सुसमयः। भवदीयं गजं श्वेतीकर्तुम् अर्हति क्याङ्गः'' इति।

राजा दूतद्वारा क्याङ्गम् आनायितवान्। राज्ञः अपेक्षां श्रुत्वा एव क्याङ्गः ज्ञातवान् यत् मां कष्टे पातयितुं कुम्भकारः एव राजानं प्रेरितवान् इति। अतः सः राजानम् उक्तवान्– ''प्रभो, एकं गजं किं, गजशालाम् एव श्वेतीकर्तुं समर्थः अहम्। किन्तु तदर्थं सुविशालं भाण्डम् आवश्यकम्। यथा वस्त्राणि क्वथति जले स्थाप्यन्ते तथैव गजः अपि स्थापनीयः। अतः मम निवेदनं यत् एतस्य कुम्भकारस्य द्वारा तादृशं भाण्डं कारयतु इति'' इति।

राजा कुम्भकारं दृष्ट्वा आज्ञापितवान्– ''श्वः प्रातःकालाभ्यन्तरे गजस्य स्थित्यर्थम् आवश्यकं सुविशालं भाण्डं निर्मातव्यं भवता। मम आज्ञा न परिपालिता चेत् भवन्तं देशात् निष्कासयिष्यामि'' इति।

'अहो, मया चिन्तितस्य उपायस्य विपरीतं फलं मया एव प्राप्तम्। अहो दुर्विधिः!' इति स्वगतं वदन् ततः निर्गतवान् कुम्भकारः परिवारमित्रजनानां सहकारेण आरात्रि कार्यं कृत्वा सुविशालं भाण्डं निर्मितवान्। तत्



स्वीकृत्य राज्ञः समीपं गतवान् च।

क्याङ्गः पात्रे जलं पूरितवान्। तस्य अधः अग्निः अपि ज्वालितः। अनन्तरं गजशालातः एकः गजः आनीतः। भाण्डे गजस्य आरोपणार्थं प्रयत्नः कृतः। यदा गजः भाण्डस्य अन्तः पदम् अस्थापयत् तदा भाण्डं शतधा भग्नम्।

एतत् दृष्ट्वा राजा महता कोपेन कुम्भकारं पश्यन् उक्तवान्– ''भोः, दृढतरं भाण्डं निर्मातुम् अशक्नुवन् कीदृशः भवान्? महत् अपमानकरम् एतत्। श्वः प्रातःकालाभ्यन्तरे यदि भवान् दृढतरं भाण्डं निर्माय न आनयेत् तर्हि शूलारोपणदण्डः अनुभोक्तव्यः भवता। जागरूकः भवतु'' इति।

राज्ञः आज्ञां शिरसा वहन् ततः निर्गतवान् कुम्भकारः। गजभारवहनसमर्थस्य भाण्डस्य निर्माणे उपायम् अजानन् सः रात्रौ एव गृहात् निर्गत्य देशत्यागं कृतवान्।

एषा वार्ता राज्ञा श्रुता। सः कोपेन ज्वलन् क्याङ्गम् आनाय्य खड्गं हस्तेन गृहीत्वा गर्जितवान्– "भवान् अपि मां वञ्चयितुम् उद्युक्तः अस्ति वा?" इति।

राजानं विनयेन नमस्कृत्य उक्तवान् क्याङ्गः– "प्रभो, मयि सन्देहः मास्तु। गजं श्वः मम गृहं प्रेषयतु। एकदिनाभ्यन्तरे भवतः एव सन्देहः भवेत्– एषः गजः मम उत, इन्द्रस्य ऐरावतः इति" इति।

राजा गजं क्याङ्गगृहं प्रति प्रेषितवान्। क्याङ्गः निश्रेण्याः साहाय्येन समग्रे गजे पञ्चवारं सुधालेपनं कृतवान्।

प्रातः गजं दृष्ट्वा राजा आश्चर्यचकितः, सन्तुष्टः च। "श्वेतगजः प्राप्तव्यः इति मम इच्छा अद्य पूर्णा" इति वदन् सः लक्षं सुवर्णनाणकानि, उत्तमम् अश्वं च पारितोषिकरूपेण क्याङ्गाय दत्तवान्।

गृहम् आगतः क्याङ्गः शय्यादिवस्तूनि बद्ध्वा अश्वस्य उपरि आरोप्य स्वयम् अपि आरुह्य ततः निर्गतवान्। सायङ्कालसमये देशसीमाप्रदेशे नदीतीरं प्राप्तं तेन।

नदीतीरे मलिनं छिन्नं वस्त्रं च धृतवान् कश्चित् मीनग्रहणे रतः आसीत्। तस्य समीपं गत्वा सः कः इति ज्ञात्वा पृष्टवान् क्याङ्गः– "किं भोः, किं कुर्वन् अस्ति भवान्? का एषा दुर्दशा भवतः?" इति।

क्याङ्गं दृष्ट्वा आश्चर्यं भीतिं च अनुभवन् कुम्भकारः पृष्टवान्– "भवान् अत्र किमर्थम् आगतः? एषः अश्वः कथं प्राप्तः भवता?" इति।

क्याङ्गः प्रवृत्तं समग्रं निवेद्य कुम्भकारम् उक्तवान्– "यत्र अविवेकी राजा तत्र दिनमात्रम् अपि वासः न करणीयः। एषा नदी अतिक्रान्ता चेत् अन्यत् राज्यं प्राप्यते किल? अतः गच्छाव। परस्परं प्रीत्या व्यवहरन्तौ नूतनं जीवनं करिष्यावः तावत्" इति।



# प्रकृतिवैचित्र्याणि–




## अल्पेषु अल्पः, महतः महीयान्!

प्रपञ्चे तादृशः प्रायः कोऽपि न स्यात्, यं च मशकः न दष्टवान् स्यात्। प्रपञ्चे यस्मिन् कस्मिन् वा कोणे पश्यन्तु भवन्तः, तत्र मशकाः अल्पप्रयासेन एव दृष्टिपथम् आगच्छन्ति। न केवलम् उत्तरकेनडा, सैबीरिया इत्यादिषु शीतप्रदेशेषु ते सन्ति, अपि तु उत्तरध्रुवप्रान्ते अपि ते सन्ति एव। यत्र अधिकम् औष्ण्यं, निरन्तरवृष्टिः वा भवति तत्र तु मशकानां सुखजीवनम्। अतः वयं वक्तुं शक्नुमः यत् मशकः अल्पेषु अल्पः किन्तु महतः महीयान् इति।

## अहो, कीटकुलम्!

भूमौ १०,००,००० प्रकारकाः जीविनः सन्ति इति श्रूयते। तेषु प्रायः ८,००,००० प्रकारकाः कीटाः एव। यदि कीटजातीयानाम् उल्लेखः एकत्र करणीयः स्यात् तर्हि ६,००० पुटात्मकः महाग्रन्थः रचनीयः भवेत्। तादृशस्य पुस्तकस्य पठनस्य आरम्भं कृत्वा यावत् भवन्तः अन्तिमभागं पठेयुः तावता लोके काश्चन कीटजातयः नामावशिष्टाः, पुनः काश्चन नूतनतया उत्पन्नाः च भवेयुः।







## कुक्कुटशावकानां गणना!

ये दुराशां प्रदर्शयन्ति तान् अधिकृत्य जनाः वदन्ति यत् एते अण्डभेदात् पूर्वम् एव शावकं गणयन्ति इति। अस्माकं देशे कुक्कुटाः कति स्युः? मानवाः यावन्तः सन्ति, प्रायः तावन्तः एव। परिपूर्णं विकासं प्राप्य कुक्कुटशावकाः अण्डशल्कं विभिद्य बहिः आगन्तुं दिनद्वयस्य समयं स्वीकुर्वन्ति।

# समीचीना फलवाटिका

| | |
|---|---|
| द्रष्टा - बहुसमीचीना अस्ति एषा फलवाटिका। भवान् एव वा एतस्याः स्वामी? | This orchard is very beautiful. Does this belong to you? |
| कृषिकः - आं, श्रीमन्! | Yes, sir. |
| द्र - कथं फलसस्यवर्धने आसक्तिः भवतः? | How did you get interested in growing fruit–trees? |
| कृ - जीवनार्थं कोऽपि मार्गः आश्रयणीयः एव खलु? विद्यमाने अल्पे क्षेत्रे अधिकलाभः प्राप्तव्यः इति उद्देशेन फलवाटिका वर्धिता। | We need an occupation for our livelihood. Don't we? From a small land like this we can get good income only by growing fruits. So I raised this fruit–garden. |
| द्र - जीवनोपायमात्रं यदि निमित्तं स्यात् तर्हि वाटिका एवं मनोहरा न अभविष्यत्। | If livelihood is the only aim, there is no need for beauty in the orchard. |
| कृ - तत्तु सत्यम्। यतः अहम् एतानि आधारीकृत्य जीवामि, अतः एतानि सस्यानि प्राणतुल्यानि मम। एकैकस्य अपि सस्यस्य योगक्षेमम् अहं स्वयं पश्यामि। | That is true, but since I depend on these plants for my living I consider them to be part of my life. I take care of each plant myself. |
| द्र - वाटिकादर्शनतः एव ज्ञायते यत् सस्यवर्धने भवतः महती आस्था इति। तदस्तु, एतेषां फलानां विक्रयण-व्यवस्था कथम्? | A look at the orchard is enough to convince one of your interest in growing plants. That is O.K. but what is your arrangement for selling the fruits? |
| कृ - मध्यवर्तिनः प्रतिसप्ताहम् अत्र स्वयम् आगत्य क्रेष्यन्ति। अतः न काऽपि समस्या ह्यत्र। | That is not a problem because traders themselves come here every week. |
| द्र - इतः विशेषलाभः स्यात् खलु भवतः? | You must be making good profits then! |
| कृ - सर्वं दैवानुग्रहफलम्। | It is all God's grace. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां मे-९२ मासे प्रकटयिष्यामः।**



T. C. Jain



S. B. Prasad

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'जनवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **पश्यन्ती हसति वैचित्र्यम्।**

द्वितीयचित्रम् - **स्पृशन्ती पश्यति शुककृत्यम्।**

प्रेषकः - ब्र. शर्वानन्दः, ४८/९७ गीतामन्दिरम्, मिश्रपोखरा, वाराणसी-२२१००२




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| 1. *Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 2. *Periodicity of Publication* | MONTHLY<br>Ist of each calender month |
| 3. *Printer's Name* | B.V. REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 4. *Publisher's Name* | B.VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 5. *Editor's Name* | B.NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 6. *Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. Sri B. VENKATRAMA REDDY<br>2. Sri B.V. NARESH REDDY<br>3. Sri B.V. SANJAY REDDY<br>4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI<br>6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA<br>8. Kum. B.L. ARCHANA<br>9. Kum. B.L. ARADHANA(Minor)<br>(Minor admitted to the benefits of Partnership)<br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |

I, B Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

**B. VISWANATHA REDDI**
*Signature of the Publisher*

*2nd March 1992*

